पूर्णप्रज्ञसंशोदनामन्दिरम्

नवदेहलीस्थमानवसंसाधनविकासमंत्रालयाधीन-
राष्ट्रीयसंसकृतसंस्थानसंम्मानितम्

**श्रीबळाचार्यनिबद्धव्याख्यायुतम्**

# जितन्तेस्तोत्रम्

सम्पादकः - डा. ए.वी.नागसम्पिगे
निर्देशकः, पूर्णप्रज्ञसंशोधनामन्दिरम्, बेङ्गलूरु

पूर्णप्रज्ञसंशोधनामन्दिरम्
पूर्णप्रज्ञसंशोधनामन्दिरम्, बेङ्गलूरु - २८

२००८

पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्

श्रीबाळाचार्यनिबद्धव्याख्यायुतम्

# जितन्तेस्तोत्रम्

सम्पादकः
डा. ए.वि. नागसम्पिगे
निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

२००८

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला- ५७

# श्रीबाळाचार्यनिबद्धव्याख्यायुतं जितन्तेस्तोत्रम्

सम्पादकः- **डा. ए.वि. नागसम्पिगे** निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्

*This publication is brought out by the generous financial help of*

**Rashtriya Sanskrit Samsthan, (Deemed University), New Delhi**

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम् बेङ्गलूरु - २८

प्रथममुद्रणम् - २००८

मुद्रितपुस्तकसङ्ख्या - १०००

लावण्यमुद्रणद्वारा मुद्रितम्।

**Poornaprajna Samshodhana Mandiram**
Recognised by Rashtriya Sanskrit Samsthan, Deemed University,
Ministry of H.R.D., Govt. of India, New Delhi

# JITANTE STOTRAM

## with the commentary of Śri Bālācārya

*Editor*
**Dr. A.V. Nagasampige**
Director, Poornaprajna Samshodhana Mandiram, Bangalore

***Publisher :***
Poornaprajna Samshodhana Mandiram
**Poornaprajna Vidyapeetha,**
**Bangalore - 560 028**

**2008**

# अनुग्रहसन्देशः

पञ्चरात्रान्तर्गतमिदं **'जितन्तेस्तोत्रम्'** सर्वोत्तमस्य भगवतः श्रीमन्नारायणस्य असाधारणमहत्त्वं प्रतिपादयद् विराजतेतमाम् । स्तोत्रस्यास्य पठनेन परे हरौ अमला अखण्डा च भक्तिः प्रजायत इति सर्वानुभवसिद्धम् । स्वदोषख्यापनेन स्वात्मात्मीयसर्वसमर्पणमपि प्रज्ञापयदिदं स्तोत्रं सुजनानां श्रद्धाप्रचोदकमित्यत्र न सन्देहगन्धः ।

अर्चनावसरे अभिषेककाले स्तोत्रमिदमवश्यं पठनीयमिति पदवाक्य-प्रमाणपारावारपारीणैः सर्वज्ञकल्पैः श्रीमट्टीकाकृत्पादैः आज्ञप्तमस्ति- 'जितन्त इति स्तोत्रं च पठन् संस्नापयेद्धरिम् ।' इति । भगवतः पुरुषोत्तमस्य निर्दोषगुणपूर्णत्वानुसन्धानं जीवस्य तद्दासत्वानुसन्धानं च पापपञ्जरविभेदकमिति वेदान्तरहस्यम् । प्राधान्येनास्मिन् स्तोत्रे प्रागुक्ततत्त्वद्वयं सम्यङ् निरूपितम् । स्तोत्रस्यास्य अर्थानुसन्धानपूर्वकपठने भगवति भक्तिश्रद्धे विवर्धेते ।

तदेतत्सोत्रं बाळाचार्यनिबद्धव्याख्यानसहितं कर्णाटकाङ्ग्लभाषा-अनुवादसहितं च पूर्णप्रज्ञसंशोधनमन्दिरेण प्राकाश्यं नीयत इति महत्प्रमोद-निदानमेतत् ।

अपूर्वस्यास्य ग्रन्थस्य प्रकाशनार्थं सि.के. प्रह्लादराव् महोदयः द्वादश-सहस्ररूप्यकाणि समर्प्य सेवां व्यधात् । सकुटुम्बस्यास्य वृद्धिं समृद्धिं च भगवति प्रार्थयामहे ।

ग्रन्थस्यास्य शोधकमानन्दतीर्थनागसम्पिगे इत्युपाह्वम् अस्मत्प्रियच्छात्रम् अस्मदाराध्यः श्रीकृष्णः ज्ञानभक्त्यादिप्रदानेन समनुगृह्णातु इति प्रार्थयामहे ।

**श्रीविश्वेशतीर्थश्रीपादाः**
श्रीपेजावरमठाधीशाः, उडुपि

# ಮುನ್ನುಡಿ

ಜಿತಂತೇ ಸ್ತೋತ್ರವು ಪಾಂಚರಾತ್ರಾಗಮದ ಒಂದು ಭಾಗವಾದ ಪರಮ ಪವಿತ್ರ ಕೃತಿ. ಸಾಧಕರು ನಿತ್ಯವೂ ತಮ್ಮ ದೇವರ ಪೂಜೆಯಲ್ಲಿ ಅಭಿಷೇಕ ಮಾಡುವ ಸಂದರ್ಭದಲ್ಲಿ ಶ್ರೀಹರಿಯ ಸನ್ನಿಧಾನದಲ್ಲಿ ಈ ಸ್ತೋತ್ರವನ್ನು ಪಠಿಸಿ ಆತ್ಮನಿವೇದನೆ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಈ ಸ್ತೋತ್ರದಲ್ಲಿ ಶ್ರೀಹರಿಯ ಅಗಣಿತ ಮಹಿಮೆ ಅಡಗಿದೆ. ಜೀವೋತ್ತಮರಾದ ಬ್ರಹ್ಮದೇವರು ಇಲ್ಲಿ ಪರದೇವತೆಯ ಮಂಗಲಗುಣಗಾನ ಮಾಡಿದ್ದಾರೆ. ಈ ಗುಣಚಿಂತನೆಯು ಪಾಪ ಪರಿಹಾರಕ. ಶ್ರೀಮಟ್ಟೀಕಾಕೃತ್ಪಾದರು ಇದನ್ನೂ ನಿತ್ಯವೂ ಪಠಿಸಬೇಕೆಂದು ಆದೇಶಿಸಿದ್ದಾರೆ-

**'ಜಿತಂತ ಇತಿ ಸ್ತೋತ್ರಂ ಚ ಪಠನ್ ಸಂಸ್ನಾಪಯೇದ್ ಹರಿಮ್ ॥'**

*(ಪದ್ಯಮಾಲಾ, ಶ್ಲೋ. 77)*

ಚತುರ್ಮುಖ ಬ್ರಹ್ಮದೇವರು ತಾವು ಸ್ವತಃ ಪಾಪ-ಅಜ್ಞಾನ ಮೊದಲಾದ ಯಾವುದೇ ವಿಕಾರವಿಲ್ಲದವರಾದರೂ, ನಾನಾ ಬಗೆಯ ಪಾಪಗಳನ್ನು ಜನ್ಮ ಜನ್ಮಾಂತರದಲ್ಲಿ ಮಾಡಿದ ನಮ್ಮಂತಹ ಜೀವರಾಶಿಗಳು, ಶ್ರೀಹರಿಯಲ್ಲಿ ತಮ್ಮ ಪಾಪಗಳನ್ನು ನಿವೇದಿಸಿಕೊಳ್ಳಬೇಕಾದ ಕ್ರಮವನ್ನು ಇಲ್ಲಿ ಸೂಚಿಸಿದ್ದಾರೆ. ಪಾಪಗಳನ್ನು ಕಳೆದುಕೊಳ್ಳುವ ಮೂರು ವಿಧಾನಗಳನ್ನು ಧರ್ಮಶಾಸ್ತ್ರಗಳು ವಿವರಿಸಿದ್ದಾವೆ-

1. ಪಾಪಗಳನ್ನು ದೊಡ್ಡವರ ಬಳಿ ಹೇಳಿಕೊಳ್ಳುವುದು.
2. ಮಾಡಿದ ಪಾಪದ ಬಗ್ಗೆ ಪಶ್ಚಾತ್ತಾಪದಿಂದ ಬೆಂದು ಪ್ರಾಯಶ್ಚಿತ್ತವನ್ನು ಮಾಡಿಕೊಳ್ಳುವುದು.
3. ಕಠಿಣ ವ್ರತ ನಿಯಮಗಳ ಮೂಲಕ ಪ್ರಾಯಶ್ಚಿತ್ತ ಮಾಡಿಕೊಳ್ಳಲು ಅಶಕ್ತನಾದರೆ ಆಪತ್ಕಾಲದಲ್ಲಿ ಶಾಸ್ತ್ರಗಳು ಸೂಚಿಸುವ ಮಹಾದಾನಗಳನ್ನು ಮಾಡಿ ಪಾಪಗಳನ್ನು ತೊಳೆದುಕೊಳ್ಳಬೇಕು-

**'ಖ್ಯಾಪನೇನ ಅನುತಾಪೇನ ತಥಾ ದಾನೇನ ಚಾಪದಿ ।**
**ಪಾಪಕೃನ್ಮುಚ್ಯತೇ ಪಾಪಾತ್.....'**

ಈ ಹಿನ್ನೆಲೆಯಲ್ಲಿ ನಾವು ಪರಮಾತ್ಮನ ಸನ್ನಿಧಿಯಲ್ಲಿ ಪಾಪಗಳನ್ನು ನಿವೇದಿಸಿಕೊಂಡು ಮತ್ತೆ ಅಂತಹ ಕಾರ್ಯಗಳಲ್ಲಿ ಪ್ರಚೋದನೆ ನೀಡದಿರೆಂದು

ಪ್ರಾರ್ಥಿಸುವುದು ಅತ್ಯವಶ್ಯವಿದೆ. ಈ ಜನ್ಮದಲ್ಲಿ ಮಾಡಿದ ಪಾಪಗಳ ಅರಿವು ನಮಗಿದೆ. ಆದರೆ ಹಿಂದೆ ಹಿಂದಿನ ಜನ್ಮಗಳಲ್ಲಿ ಮಾಡಿದ ಮುಂದೆ ಮುಂದಿನ ಜನ್ಮಗಳಲ್ಲಿ ಮಾಡಲಿರುವ ಪಾಪಗಳ ಬಗ್ಗೆ ಯಾವ ಪರಿಕಲ್ಪನೆ ಇಲ್ಲ.

ಇದಲ್ಲದೇ ಹಿಂದಿನ ಮತ್ತು ಮುಂದಿನ ಜನ್ಮಗಳ ನಮ್ಮ ಪಾಪಗಳನ್ನು ದೇವರ ಬಳಿ ನಿವೇದಿಸಬೇಕೆಂಬ ಸಂಸ್ಕಾರ- ವಿವೇಕ ಹಿಂದೆ ಇತ್ತೆಂದಾಗಲೀ, ಮುಂದೆ ಇರಬಹುದೆಂದಾಗಲೀ ನಂಬುವಂತಿಲ್ಲ. ಈಗ ಸುಜನರ ಸಹವಾಸ ಮತ್ತು ಶಾಸ್ತ್ರ ಶ್ರವಣದಿಂದ ಸಂಸ್ಕಾರ ಹಾಗೂ ಕಿಂಚಿತ್ ವಿವೇಕಗಳಿವೆ. ಇಂತಹ ಸ್ಥಿತಿಯಲ್ಲಿ ನಾವು ಈ ಜನ್ಮ ಹಾಗೂ ಜನ್ಮಾಂತರದ ಪಾಪಕರ್ಮಗಳನ್ನು ದೇವರಲ್ಲಿ ನಿವೇದಿಸಿ ಕೊಳ್ಳಬೇಕು.

ಈ ಹಿನ್ನೆಲೆಯಲ್ಲಿ ನಮಗೆ ಕರ್ತವ್ಯಪ್ರಜ್ಞೆಯನ್ನು ಮೂಡಿಸಲು 'ಜಿತಂತೇ ಸ್ತೋತ್ರವು' ಬ್ರಹ್ಮದೇವರಿಂದ ಕೊಡಲ್ಪಟ್ಟಿದೆ. ಇದರ ಅರ್ಥಾನುಸಂಧಾನ ಪೂರ್ವಕವಾದ ಪಠನವು ಶ್ರೀಹರಿವಾಯುಗುರುಗಳ ಕೃಪೆ ದೊರಕಿಸುವುದರಲ್ಲಿ ಸಂಶಯವಿಲ್ಲ.

ಈ ಕೃತಿಯು, ಹಿಂದೆ ಬಾಳಾಚಾರ್ಯರ ವೈಜಯಂತೀ ಎಂಬ ವ್ಯಾಖ್ಯಾನ ದೊಂದಿಗೆ ಮುದ್ರಿತವಾಗಿತ್ತು. ಇವರು ಶ್ರೀಮದುತ್ತರಾದಿ ಮಠದ ಶ್ರೀಸತ್ಯಸಂಕಲ್ಪ ತೀರ್ಥರಲ್ಲೂ (1830-1841), ತಮ್ಮ ತಂದೆಯವರಾದ ಶ್ರೀ ಅನಂತಾಚಾರ್ಯ ರಲ್ಲೂ ವ್ಯಾಸಂಗ ಮಾಡಿದವರು. ಇವರ ವ್ಯಾಖ್ಯಾನವು ಸರ್ವಮೂಲ ಮತ್ತು ಟೀಕಾಗ್ರಂಥಗಳಲ್ಲಿ ಅವರಿಗಿರುವ ವ್ಯಾಪಕಾಧ್ಯಯನದ ಪ್ರತಿಫಲನರೂಪವಾಗಿದೆ. ನಮ್ಮ ಪೂರ್ಣಪ್ರಜ್ಞ ಸಂಶೋಧನ ಮಂದಿರದಲ್ಲಿ ದೊರಕಿದ ಹಸ್ತ ಪ್ರತಿಯನ್ನು ಆಧರಿಸಿ ಶುದ್ಧಪಾಠ ನೀಡುವ ಯತ್ನ ಮಾಡಲಾಗಿದೆ.

ಪರಮಪೂಜ್ಯ ಗುರುಗಳಾದ ಪೇಜಾವರ ಮಠಾಧೀಶ ಶ್ರೀ ವಿಶ್ವೇಶತೀರ್ಥ ಶ್ರೀಪಾದರ ಅನುಗ್ರಹದಿಂದ ಈ ಕೃತಿಯು ಮುದ್ರಣಗೊಂಡಿದೆ. ಅವರಿಗೆ ನನ್ನ ಸಾಷ್ಟಾಂಗಪ್ರಣಾಮಗಳು ಸಲ್ಲುತ್ತವೆ.

ಸಂಶೋಧನ ಮಂದಿರದ ಅಧ್ಯಕ್ಷರಾದ ಪ್ರೊ। ಡಿ. ಪ್ರಹ್ಲಾದಾಚಾರ್ಯರು ಎಲ್ಲರಿಗೂ ಉತ್ಸಾಹ ತುಂಬಿ ಮಾರ್ಗದರ್ಶನ ಮಾಡುತ್ತಿದ್ದಾರೆ. ಅವರಿಗೂ ನನ್ನ ಆದರಪೂರ್ವಕ ನಮನಗಳು.

ಕನ್ನಡ ಮತ್ತು ಆಂಗ್ಲಭಾಷೆಯಲ್ಲಿ ಸ್ತೋತ್ರದ ಸಂಕ್ಷಿಪ್ತ ಭಾವ ವಿವರವನ್ನು

ನೀಡಲಾಗಿದೆ. ಆಂಗ್ಲಭಾಷೆಯ ಅನುವಾದ ಕಾರ್ಯದಲ್ಲಿ ಉಪಕರಿಸಿದ ಗೋಪಿನಾಥ ಕಲ್ಯಾಣಿ ಅವರಿಗೆ ನನ್ನ ಗೌರವದ ವಂದನೆಗಳು.

ಈ ಕೃತಿಯ ಮುದ್ರಣಕ್ಕಾಗಿ ನನ್ನ ಶಿಷ್ಯರಾದ ಶ್ರೀಯುತ ಸಿ.ಕೆ.ಪ್ರಹ್ಲಾದ್ ಅವರು 12.000 ರೂ.ಗಳನ್ನು ನೀಡಿದ್ದಾರೆ ಅವರ ಶ್ರದ್ಧೆ-ಸೌಜನ್ಯಗಳು ಅನುಕರಣೀಯ ಶ್ರೀಹರಿವಾಯುಗುರುಗಳು ಈ ಕುಟುಂಬಕ್ಕೆ ಪರಮಾನುಗ್ರಹ ಮಾಡಲೆಂದು ಪ್ರಾರ್ಥಿಸುತ್ತೇನೆ.

ಹಿಂದಿನ ಮುದ್ರಿತ ಪ್ರತಿಗೂ ಸಂಶೋಧಿತ ಪ್ರತಿಗೂ ಇರುವ ಪಾಠಾಂತರ ವ್ಯತ್ಯಾಸಗಳನ್ನು ವಿದ್ವಾಂಸರು ಗಮನಿಸಬಹುದಾಗಿದೆ. ಈ ಪ್ರಯತ್ನದ ಹಿಂದಿರುವ ಶ್ರದ್ಧೆಯನ್ನೂ ಗಮನಿಸಿ ಹರಸಬೇಕೆಂದು ಬಿನ್ನಹ.

ಅಕ್ಷರಸಂಯೋಜನೆ ನಡೆಸಿದ ಶ್ರೀ ಅಂಜನಪ್ರಸಾದ್ ಇವರಿಗೂ, ಪಾಠಾಂತರದ ಸಂಕಲನ ಕಾರ್ಯದಲ್ಲಿ ಸೇವೆ ಸಲ್ಲಿಸಿದ ಶ್ರೀ ಅಪ್ಪೂರಾಯರು ಹಾಗೂ ಶ್ರೀ ಮಾಧವ ರಾಯರಿಗೆ ಹರಿವಾಯುಗುರುಗಳ ವಿಶೇಷಾನುಗ್ರಹವನ್ನು ಪ್ರಾರ್ಥಿಸುತ್ತೇನೆ.

ಆಕರಗಳನ್ನು ಹುಡುಕುವಲ್ಲಿ ಉಪಕರಿಸಿದ ವಿದ್ವಾನ್ ಭೀಮಸೇನಾಚಾರ್ಯ, ಅಧ್ಯಾಪಕರು, ಪೂರ್ಣಪ್ರಜ್ಞ ವಿದ್ಯಾಪೀಠ ಇವರಿಗೆ ನಾನು ಆಭಾರಿಯಾಗಿದ್ದೇನೆ.

ಈ ಕೃತಿಯ ಮುದ್ರಣವನ್ನು ನೆರವೇರಿಸಿಕೊಟ್ಟ ಲಾವಣ್ಯ ಮುದ್ರಣಾಲಯದ ಅಧಿಕಾರಿವರ್ಗಕ್ಕೆ ನಾನು ಆಭಾರಿಯಾಗಿದ್ದೇನೆ.

**ಡಾ। ಎ.ವಿ. ನಾಗಸಂಪಿಗೆ**

ನಿರ್ದೇಶಕರು, ಪೂರ್ಣಪ್ರಜ್ಞಸಂಶೋಧನ ಮಂದಿರ,

ಬೆಂಗಳೂರು

# जितन्तेस्तोत्रम्

## ।। अथ प्रथमोऽध्यायः ।।

ब्रह्मोवाच -

जितं ते पुण्डरीकाक्ष पूर्णषाड्गुण्यविग्रह ।
परानन्द परब्रह्मन्नमस्ते चतुरात्मने ।। १ ।।

नमस्ते पीतवसन नमः कटकहारिणे ।
नमो नीलालकाबद्धवेणीसुन्दरपुङ्गव ।। २ ।।

स्फुरद्वलयकेयूरनूपुराङ्गदभूषणैः ।
शोभनैर्भूषिताकारकल्याणगुणराशये ।। ३ ।।

करुणापूर्णहृदय शङ्खचक्रगदाधर ।
अमृतानन्दपूर्णाभ्यां लोचनाभ्यां विलोकय ।। ४ ।।

कृशं कृतघ्नं दुष्कर्मकारिणं पापभाजनम् ।
अपराधसहस्राणामाकरं करुणाकर ।
कृपया मां केवलया गृहाण मधुराधिप ।। ५ ।।

विषयार्णवमग्नं मामुद्धर्तुं त्वमिहार्हसि ।
पिता माता सुहृद्बन्धुर्भ्राता पुत्रस्त्वमेव मे ।
विद्या धनं च कामश्च नान्यत्किञ्चित्त्वया विना ।। ६ ।।

यत्र कुत्र कुले वासो येषु केषु भवोऽस्तु मे ।
तव दास्यैकभावे स्यात्सदा सर्वत्र मे रतिः ।। ७ ।।

मनसा कर्मणा वाचा शिरसा वा कथञ्चन ।
त्वां विना नान्यमुद्दिश्य करिष्ये किञ्चिदप्यहम् ।। ८ ।।

पाहि पाहि जगन्नाथ कृपया भक्तवत्सल ।
अनाथोऽहमधन्योऽहमकृतार्थो ह्यकिञ्चनः ॥ ९ ॥

नृशंसः पापकृत् क्रूरो वञ्चको निष्ठुरः शठः ।
भवार्णवनिमग्नं मामनन्यकरुणोदधे ।
करुणापूर्णदृष्टिभ्यां दीनं मामवलोकय ॥ १० ॥

त्वदग्रे पतितं त्यक्तुं तावकं नार्हसि प्रभो ।
मया कृतानि पापानि त्रिविधानि पुनः पुनः ।
त्वत्पादपङ्कजं प्राप्तुं नान्यत्त्वत्करुणां विना ॥ ११ ॥

साधनानि प्रसिद्धानि यागादीन्यब्जलोचन ।
त्वदाज्ञया प्रवृत्तानि त्वामुद्दिश्य कृतानि वै ॥ १२ ॥

भक्त्यैकलभ्यः पुरुषोत्तमो हि जगत्प्रसूतिस्थितिनाशहेतुः ।
अकिञ्चनं नान्यगतिं शरण्यं गृहाण मां क्लेशिनमम्बुजाक्ष ॥ १३ ॥

धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन ।
त्वत्पादपङ्कजस्याधो जीवितं मम दीयताम् ॥ १४ ॥

कामये तावकत्वेन परिचर्यासु वर्तनम् ।
नित्यं किङ्करभावेन परिगृह्णीष्व मां विभो ॥ १५ ॥

लोकं वैकुण्ठनामानं दिव्यं षड्गुणसंयुतम् ।
अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥ १६ ॥

नित्यसिद्धैः समाकीर्णं त्वन्मयैः पाञ्चकालिकैः ।
सभाप्रासादसंयुक्तं वनैश्चोपवनैः शुभैः ॥ १७ ॥

वापीकूपतटाकैश्च वृक्षखण्डैः सुमण्डितम् ।
अप्राकृतसुरैर्वन्द्यमयुतार्कसमप्रभम् ॥ १८ ॥

प्रकृष्टसत्त्वराशिं त्वां कदा द्रक्ष्यामि चक्षुषा ।
क्रीडन्तं रमया सार्धं लीलाभूमिषु केशवम् ।। १९ ।।

मेघश्यामं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ।
उन्नसं चारुदशनं बिम्बोष्ठं शोभनाननम् ।। २० ।।

विशालवक्षसं श्रीशं कम्बुग्रीवं जगद्गुरुम् ।
आजानुबाहुपरिघमुन्नतांसं मधुद्विषम् ।। २१ ।।

तनूदरं निम्ननाभिमापीनजघनं हरिम् ।
करभोरुं श्रियः कान्तं कदा द्रक्ष्यामि चक्षुषा ।। २२ ।।

शङ्खचक्रगदापद्मैरङ्कितं पादपङ्कजम् ।
शरच्चन्द्रशताक्रान्तनखराजिविराजितम् ।। २३ ।।

सुरासुरैर्वन्द्यमानमृषिभिर्वन्दितं सदा ।।
मूर्धानं मामकं देव तावकं मण्डयिष्यति ।। २४ ।।

कदा गम्भीरया वाचा श्रिया युक्तो जगत्पतिः ।
च्रामरव्यग्रहस्तं मामेवं कुर्विति वक्ष्यति ।। २५ ।।

कदाहं राजराजेन गणनाथेन चोदितः ।
चरेयं भगवत्पादपरिचर्यासुवर्तनम् ।। २६ ।।

शान्ताय सुविशुद्धाय तेजसे परमात्मने ।
नमः सर्वगुणातीतषड्गुणायादिवेधसे ।। २७।।

सत्यज्ञानानन्तगुणब्रह्मणे चतुरात्मने ।
नमो भगवते विष्णो वासुदेवामितद्युते ।। २८ ।।

चतुः पञ्चनवव्यूहदशद्वादशमूर्तये ।
नमोऽनन्ताय विश्वाय विश्वातीताय चक्रिणे ।। २९ ।।

नमस्ते पञ्चकालज्ञ पञ्चकालपरायण ।
पञ्चकालैकमनसां त्वमेव गतिरव्ययः ॥ ३० ॥

स्वमहिम्नि स्थितं देवं निरनिष्टं निरञ्जनम् ।
अप्रमेयमजं विष्णुं शरणं त्वां गतोऽस्म्यहम् ॥ ३१ ॥

वागतीतं परं शान्तं (अब्ज) कञ्जनाभं सुरेश्वरम् ।
तुरीयाद्यतिरिक्तं त्वां कौस्तुभोद्भासिवक्षसम् ॥ ३२ ॥

विश्वरूपं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ।
मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन (धराधर) ॥ ३३ ॥

इच्छाम्यहं महाभाग कारुण्यं तव सुव्रत ।
सकलावरणातीत किङ्करोऽस्मि तवानघ ॥ ३४ ॥

पुनः पुनः किङ्करोऽस्मि तवाहं पुरुषोत्तम
आसनाद्यनुयागान्तमर्चनं यन्मया कृतम् ।
(भाव) भोगहीनं क्रियाहीनं मन्त्रहीनमभक्तिकम्
तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु ॥ ३५ ॥

इति स्तोत्रेण देवेशं स्तुत्वा मधुनिघातिनम् ।
यागावसानसमये देवदेवस्य चक्रिणः ।
नित्यं किङ्करभावेन स्वात्मानं विनिवेदयेत् ॥ ३६ ॥

॥ इति श्रीपञ्चरात्रागमे जितन्तेस्तोत्रे प्रथमोऽध्यायः ॥

## ।। अथ द्वितीयोऽध्यायः ।।

ब्रह्मोवाच –

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ।। १ ।।

विज्ञापनमिदं देव श्रृणुष्व पुरुषोत्तम ।
नरनारायणाभ्यां च श्वेतद्वीपनिवासिभिः ।। २ ।।

नारदाद्यैर्मुनिगणैः सनकाद्यैश्च योगिभिः ।
ब्रह्मेशाद्यैः सुरगणैः पञ्चकालपरायणैः ।
पूज्यसे पुण्डरीकाक्ष दिव्यैर्मन्त्रैर्महात्मभिः ।। ३ ।।

पाषण्डधर्मसङ्कीर्णे भगवद्भक्तिवर्जिते ।
कलौ जातोऽस्मि देवेश सर्वधर्मबहिष्कृते ।। ४ ।।

कथं त्वामसमाचारः पापप्रसवभूरुहः ।
अर्चयामि दयासिन्धो पाहि मां शरणागतम् ।।५ ।।

तापत्रयदवाग्नौ मां दह्यमानं सदा विभो ।
पाहि मां पुण्डरीकाक्ष केवलं कृपया तव ।। ६ ।।

जन्ममृत्युजराव्याधिदुःखसन्तप्तदेहिनम् ।
पालयाशु दृशा देव तव कारुण्यगर्भया ।। ७ ।।

इन्द्रियाणि मया जेतुमशक्यं पुरुषोत्तम ।
शरीरं मम देवेश व्याधिभिः परिपीडितम् ।। ८ ।।

मनो मे पुण्डरीकाक्ष विषयानेव धावति ।
वाणी मम हृषीकेश मिथ्यापारुष्यदूषिता ।। ९ ।।

एवं साधनहीनोऽहं किं करिष्यामि केशव ।
रक्ष मां कृपया कृष्ण भवाब्धौ पतितं सदा ॥ १० ॥

अपराधसहस्राणां सहस्रमयुतं तथा ।
अर्बुदं चाप्यसङ्ख्येयं करुणाब्धे क्षमस्व मे ॥ ११ ॥

यं चापराधं कृतवानज्ञानात्पुरुषोत्तम ।
भक्त(अज्ञ)स्य मम देवेश तत्सर्वं क्षन्तुमर्हसि ॥ १२ ॥

अज्ञत्वादल्पशक्तित्वादालस्याद्दुष्टभावनात् ।
कृतापराधं कृपणं क्षन्तुमर्हसि मां विभो ॥ १३ ॥

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
तानि सर्वाणि मे देव क्षमस्व पुरुषोत्तम ॥ १४ ॥

यज्जन्मनः प्रभृति मोहवशं गतेन
नानापराधशतमाचरितं मया ते ।
अन्तर्बहिश्च सकलं तव पश्यतो हि
क्षन्तुं त्वमर्हसि हरे करुणावशेन ॥ १५ ॥

कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ॥ १६ ॥

॥ इति श्रीपञ्चरात्रागमे जितन्तेस्तोत्रे द्वितीयोऽध्यायः ॥ २ ॥

## ।। अथ तृतीयोऽध्यायः ।।

ब्रह्मोवाच –

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ।। १ ।।

नमस्ते वासुदेवाय शतानन्दचिदात्मने ।
अध्यक्षाय स्वतन्त्राय निरपेक्षाय शाश्वते ।। २ ।।

अच्युतायाविकाराय तेजसां निधये नमः ।
क्लेशकर्माद्यसंस्पृष्टपूर्णषाड्गुण्यमूर्तये ।। ३ ।।

त्रिभिर्ज्ञानबलैश्वर्यवीर्यशक्त्योजसां युगैः ।
त्रिगुणाय नमस्तेऽस्तु नमस्ते चतुरात्मने ।। ४ ।।

चतुःपञ्चनवव्यूहदशद्वादशमूर्तये ।
प्रधानपुरुषेशाय नमस्ते चतुरात्मने ।। ५ ।।

अनेकमूर्तये तुभ्यममूर्तायैकमूर्तये ।
नारायण नमस्तेऽस्तु पुण्डरीकायतेक्षण ।। ६ ।।

सुभ्रूललाट सुनस (सुमुख) सुस्मिताधरविद्रुम ।
पीनवृत्तायतभुज श्रीवत्सकृतभूषण ।। ७ ।।

तनुमध्यमहावक्ष पद्मनाभ नमोऽस्तु ते ।
विलासविक्रमाक्रान्तत्रैलोक्यचरणाम्बुज ।। ८ ।।

नमस्ते पीतवसन स्फुरन्मकरकुण्डल ।
स्फुरत्किरीटकेयूरनूपुराङ्गदभूषण ।। ९ ।।

पञ्चायुध नमस्तेऽस्तु नमस्ते पञ्चकालिक ।
पञ्चकालरतानां त्वं योगक्षेमं वह प्रभो ।। १० ।।

नित्यज्ञानबलैश्वर्य भो गोपकरणाच्युत ।
नमस्ते ब्रह्मरुद्रादिलोकयात्राप्रवर्तक ॥ ११ ॥

जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ।
त्वं च स्वामी गुरुर्माता पिता च मम बान्धवः ॥ १२ ॥

अपि त्वां भगवन् ब्रह्मशिवशक्रमहर्षयः ।
द्रष्टुं यष्टुमभिष्टोतुमद्यापीश न हीशते ॥ १३ ॥

तापत्रयमहाग्राहभीषणे भवसागरे ।
मज्जतां नाथ नौरेषा प्रणतिस्तु त्वदर्पिता ॥ १४ ॥

अनाथाय जगन्नाथ शरण्य शरणार्थिने ।
प्रसीद सीदते मह्यं मुह्यते भक्तवत्सल ॥ १५ ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चनम् ।
तत्क्षन्तव्यं प्रपन्नानामपराधसहो ह्यसि ॥ १६ ॥

सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत ।
किङ्करोऽस्मि हृषीकेश भूयो भूयोऽस्मि किङ्करः ॥ १७ ॥

एकत्रिचतुरत्यन्तचेष्टायेष्टकृते सदा ।
व्यक्तषाड्गुण्यतत्वाय चतुरात्मात्मने नमः ॥ १८ ॥

कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ॥ १९ ॥

॥ इति पञ्चरात्रागमे जितन्तेस्तोत्रे तृतीयोऽध्यायः ॥ ३ ॥

## ।। अथ चतुर्थोऽध्यायः ।।

ब्रह्मोवाच -

जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ।। १ ।।

देवानां दानवानां च सामान्यमधिदैवतम् ।
सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ।। २ ।।

पिता त्वमसि लोकस्य स्रष्टा संहारकस्तथा ।
अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ।। ३ ।।

संसारसागरं घोरमनन्तक्लेशभाजनम् ।
त्वामेव शरणं प्राप्य निस्तरन्ति मनस्विनः ।। ४ ।।

न ते रूपं न चाकारो नायुधानि न चास्पदम् ।
तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ।। ५ ।।

नैव किञ्चित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् ।
नैव किञ्चिदसिद्धं ते न च सिद्धोऽसि कस्यचित् ।। ६ ।।

कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ।
योगानां परमां सिद्धिं परमं ते पदं विदुः ।। ७ ।।

अहं भीतोऽस्मि देवेश संसारेऽस्मिन् भयावहे ।
पाहि मां पुण्डरीकाक्ष न जाने शरणं परम् ।। ८ ।।

कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ।
शरीरे च गतौ चास्य वर्तते मे महद्भयम् ।। ९ ।।

त्वत्पादकमलादन्यन्नमे जन्मान्तरेष्वपि ।
निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ।। १० ।।

विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमूर्जितम् ।
जन्मान्तरेऽपि मे देव माभूदस्य परिक्षयः ॥ ११ ॥

दुर्गतावपि जातायां त्वद्गतो मे मनोरथः ।
यदि नाशं न विन्देत तावताऽस्मि कृती सदा ॥ १२ ॥

न कामकलुषं चित्तं मम ते पादयोः स्थितम् ।
कामये वैष्णवत्वं च सर्वजन्मसु केवलम् ॥ १३ ॥

अज्ञानादथवा ज्ञानादशुभं यत्कृतं मया ।
क्षन्तुमर्हसि देवेश दास्येन च गृहाण माम् ॥ १४ ॥

सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत ।
किङ्करोऽस्मि हृषीकेश भूयो भूयोऽस्मि किङ्करः ॥ १५ ॥

इत्येवं मनसा स्तुत्या स्तुत्वा देवं दिने दिने ।
किङ्करोऽस्मीति चात्मानं देवायैवं निवेदयेत् ॥ १६ ॥

न जाने कर्म यत्किञ्चिन्नापि लौकिकवैदिके ।
न निषेधविधी विष्णो तव दासोऽस्मि केवलम् ॥ १७ ॥

स त्वं प्रसीद भगवन् कुरुमय्यनाथे
विष्णो कृपां परमकारुणिकः किल त्वम् ।
संसारसागरनिमग्नमनन्तदीन-
मुद्धर्तुमर्हसि हरे करुणावशेन ॥ १८ ॥

कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ॥ १९ ॥

॥ इति श्रीपञ्चरात्रागमे जितन्तेस्तोत्रे चतुर्थोऽध्यायः ॥ ४ ॥

## ।। अथ पञ्चमोऽध्यायः ।।

ब्रह्मोवाच -

जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ।। १ ।।

नमस्ते वासुदेवाय शान्तानन्दचिदात्मने ।
अध्यक्षाय स्वतन्त्राय निरपेक्षाय शाश्वते ।। २ ।।

अजिताय नमस्तुभ्यं षाड्गुण्यनिधये नमः ।
महाविभूतिसंस्थाय नमस्ते चतुरात्मने ।। ३ ।।

प्रधानपुरुषेशाय नमस्ते पुरुषोत्तम ।
सहस्रशिरसे तुभ्यं सहस्रनयनाय ते ।। ४ ।।

सहस्रबाहवे तुभ्यं सहस्रचरणाय ते ।
अमूर्ताय नमस्तुभ्यमनेकानेकमूर्तये ।। ५ ।।

अनेकमूर्तये तुभ्यमक्षराय च ते नमः ।
व्यापिने वेदवेद्याय नमस्ते परमात्मने ।। ६ ।।

चिन्मात्ररूपिणे तुभ्यं नमस्तुर्यादिमूर्तये ।
अणिष्ठाय स्थविष्ठाय बहिष्ठाय नमो नमः ।। ७ ।।

वरिष्ठाय विशिष्टाय कनिष्ठाय च ते नमः ।
नेदिष्ठाय यविष्ठाय क्षेपिष्ठाय च ते नमः ।। ८ ।।

पञ्चात्मने नमस्तुभ्यं सर्वान्तर्यामिणे नमः ।
कलाषोडशरूपाय सृष्टिस्थित्यन्तहेतवे ।। ९ ।।

नमस्ते गुणरूपाय गुणरूपनिवर्तिने ।
व्यस्ताय च समस्ताय समस्तव्यस्तरूपिणे ।। १० ।।

आदिमध्यान्तशून्याय तद्वेत्रे च नमो नमः ।
प्रणवप्रतिपाद्याय नमः प्रणवरूपिणे ॥ ११ ॥

लोकयात्राप्रसिद्ध्यर्थे सृष्टब्रह्मादिरूपिणे ।
नमस्तुभ्यं नृसिंहादिमूर्तिभेदाय विष्णवे ॥ १२ ॥

विपाकैः कर्मभिः क्लेशैरस्पृष्टवपुषे नमः ।
नमो ब्रह्मण्यदेवाय तेजसां निधये नमः ॥ १३ ॥

नित्यासाधारणानेकलोकरक्षापरिच्छिदे ।
सच्चिदानन्दरूपाय वरेण्याय नमो नमः ॥ १४ ॥

यजमानाय यज्ञाय यष्टव्याय नमो नमः ।
इज्याफलात्मने तुभ्यं नमः स्वाध्यायशालिने ॥ १५ ॥

नमः परमहंसाय नमः सत्वगुणाय ते ।
स्थिताय परमे व्योम्नि भूयो भूयो नमो नमः ॥ १६ ॥

संसारसागरे घोरे विषयावर्तसङ्कुले ।
अपारे दुस्तरेऽगाधे पतितं कर्मभिः स्वकैः ॥ १७ ॥

अनाथमगतिं भीरुं कृपया परया हरे ।
मामुद्धर दयासिन्धो सिन्धोरस्मात्सुदुस्तरात् ॥ १८ ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।
तत्क्षन्तव्यं प्रपन्नानामपराधसहो ह्यसि ॥ १९ ॥

अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे कृपया केवलमात्मसात् कुरु ॥ २० ॥

जन्मप्रभृतिदासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ।
त्वं च स्वामी गुरुर्माता पिता च मम माधव ॥ २१ ॥

नाहं हितं प्रजानामि त्वां भजाम्येव केवलम् ।
बुध्वैवं मम गोविन्द मुक्त्युपाय नमोऽस्तु ते ॥ २२ ॥

त्वमेव मे प्रियो नान्यो नेदं नेदमितीति च ।
बुद्धियोगं च मे देहि येन त्वामुपयाम्यहम् ॥ २३ ॥

इति विज्ञाप्य देवेशं वैश्वदेवं स्वधामनि ।
कुर्यात्पञ्चमहायज्ञानपि गृह्योक्तवर्त्मना ॥ २४ ॥

मादृशो न परः पापी त्वादृशो न दयापरः ।
इति मत्वा जगन्नाथ रक्ष मां गरुडध्वज ॥ २५ ॥

॥ इति श्रीपञ्चरात्रागमे जितन्तेस्तोत्रे पञ्चमोऽध्यायः ॥ ५ ॥

## ॥ श्री कृष्णार्पणमस्तु ॥

*****

बाळाचार्यनिबद्धव्याख्यायुतं

# जितन्तेस्तोत्रम्

## ।। अथ प्रथमोऽध्यायः ।।

श्रीजानिं भूमसज्ज्ञानसुखात्मानमभीष्टदम् ।
वाणीशमुखगीर्वाणनुतं श्रीनृहरिं भजे ।। १ ।।

मुष्टिनिष्पिष्टदुष्टौघमिष्टदानविचक्षणम् ।
ऐश्वर्यपर्युपासीनमुपतिष्ठेऽञ्जनासुतम् ।। २ ।।

ददाह मध्वदावाग्निर्यः कुभाष्याटवीं मुहुः ।
मन्त्रवर्णोक्त[1]वाय्वंशं प्रकाशाय तमाश्रये ।। ३ ।।

सूत्रयुग्भाष्यगाण्डीवमुक्तमानेषुणाऽजयत् ।
मायिप्रत्यर्थिनो यस्तं जयतीर्थार्जुनं भजे ।। ४ ।।

कुर्वन् यो ब्रह्ममीमांसां भाति व्यास इवापरः ।
सभायां बिन्दुभिः सत्यसङ्कल्पं नौमि तं गुरुम् ।। ५ ।।

दुर्वादिकरिपञ्चास्यान् अनन्ताचार्यशर्मणः ।
मध्वशास्त्रप्रवक्तॄन् मे नमामि ज्ञानसिद्धये ।। ६ ।।

विवृणोमि यथाबुद्धि जितन्तेस्तोत्रमुत्तमम् ।
धीशुद्ध्यै न हि बुद्धोऽस्मि नाम्ना बालः स्खलन्नपि ।। ७ ।।

'इह खलु सुखमेव मे स्याद्दुःखं मनागपि माभूत्' इति निखिलापेक्षितमोक्षस्य ब्रह्मापरपर्यायिश्रीमन्नारायणाभ्यर्चनमन्तरेणासम्भवस्य

१.'वाद्यंशम्' इति क.

'सकृदभ्यर्चितो येन देवदेवो जनार्दनः ।
यत्कृत्यं तत्कृतं तेन सम्प्राप्तं परमं पदम् ।
धर्मार्थकाममोक्षाणां नान्योपायस्तु विद्यते ।
सत्यं ब्रवीमि देवेश हृषीकेशार्चनादृते ।।' (कृ.म. २०,२१)

इति पुराणादिवचनसिद्धत्वान्मुमुक्षुभिरवश्यकर्तव्यनारायणार्चनसमयेऽवश्य-पठनीयतयान्यत्रोक्तं जितन्तेस्तोत्रं ब्रूहीत्युपसन्नेन स्वाङ्कजेन नारदेन पृष्टो ब्रह्मा परितुष्टमनास्तत्स्तोत्रं वक्तुमुपचक्रमे - **ब्रह्मोवाचेत्यादिना** ।। तत्रादौ 'सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैवचान्यत्र सत्यम् । अवान्तरं तत्परत्वं तदन्यत्सर्वागमानां पुरुषार्थस्ततोऽतः' (तत्त्वनिर्णयोदाहृतश्रुतिः) इत्यादि श्रुतिसिद्धं विष्णोः सर्वोत्कर्षमाह - **जितं त** इति ।

**ब्रह्मोवाच** -

**जितं ते पुण्डरीकाक्ष पूर्णषाड्गुण्यविग्रह ।**
**परानन्द परब्रह्मन्नमस्ते चतुरात्मने ।। १ ।।**

पुण्डरीक इव अक्षिणी यस्य स तथोक्तः तत्सम्बुद्धिः ।

'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' (छां.१.६.७) इति श्रुतेः । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् (पा.सू.५.४.११३) इति षच् । जयतेर्भावे क्तः सर्वोत्कर्षः वर्तत इति यावत् । तदुक्तं 'जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः । उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मकः' (मायावाद-खण्डनटीकोदाहृतवचनम्) इति । यद्वा कर्मणि जयतेः क्तः । दुष्टकुलं जितं पराजितं अभिभूतमित्यर्थः । 'द्विषःशतुर्वा वचनम्' (वार्तिकम्- पा.सू. २.३.६९) इति वदता कात्यायनेनैव नञा निर्दिष्टस्यानित्यत्वज्ञापनेन 'नलोकाव्ययनिष्ठा खलर्थतृनाम्' (पा.सू. २.३.६९) इति निषेधस्य प्रसक्तौ निष्ठायोगेन 'कर्तृकर्मणोः कृति' (पा.सू.२.३.६५) इति कर्तरि षष्ठी स्यात् । 'अङ्गीकृतमेव ते' इत्यनुव्याख्यानव्याख्यानावसरे 'त' इति तृतीयार्थे

अव्ययमिति सुधोक्तदिशा त इत्यव्ययं वा । जितन्तिनामा भगवदवतारविशेषः जितन्त इति तत्सम्बुद्धिरिति केचिद् वदन्ति ।

विना लक्षणप्रमाणाभ्यां वस्तुनिर्धारिणासम्भवात् स्तुत्यस्य वस्तुनो विभवादनेकानि लक्षणान्याह - **पूर्ण** इति ।। षट् च ते गुणा ऐश्वर्यादयश्च त एव षाड्गुण्यानि । 'चतुर्वर्णादिभ्यः स्वार्थ उपसङ्ख्यानम्' (वार्तिकम् - पा.सू. ७.३.३१) इति षड्गुणशब्दात् स्वार्थे ष्यञ् । 'पूर्णाशेषगुणात्मक' इत्यत्र 'पूर्णाः प्रत्येकं निरवधिकाः' (न्यायसुधायाम्- '**नारायणं निखिलम्**' इति अनुव्याख्यानमङ्गलपद्यस्थपूर्णगुणैकदेहम् इत्यस्य व्याख्याने उक्तं वाक्यम् ।) इति सुधोक्तादिशा पूर्णानि प्रत्येकमपि निरवधिकानि षाड्गुण्यानि विग्रहो देहो यस्य स तथोक्तस्तत्सम्बुद्धिः । 'तं त्वा भग प्रविश स्वाहा' (तै.त्ति.उ. शिक्षा वल्लि) [१]इति श्रुतेः । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानविज्ञान-योश्चैव षण्णां भग इतीरणा । इति स्मृतेरुदादृतश्रुतेरत्रोपयोगः । अनेन निरवधिकषड्गुणदेहवत्वलक्षणमुक्तं भवति । अत्रेन्द्रादिव्यावृत्तये निरवधिकत्वं गुणविशेषणं बोध्यम् । 'ऐश्वर्यादिगुणैः षड्भिः सामर्थ्यात्सर्वदेवताः । भगवच्छब्दवाच्याश्च साक्षात्तु भगवान् हरिः । निरपेक्षं तु सामर्थ्यं तस्य सर्वाधिकं यतः'(भा.ता.११.१६.२९) इत्येकादशभागवततात्पर्योदाहृतवचनात् । यद्वा पूर्णेति पदच्छेदः । देशतः कालतश्चाप्यपरिच्छिन्नेति तदर्थः । जगत्पालकेति वा 'उक्षासं द्यावापृथिवी बिभर्ति' इति श्रुतेः । 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' (ब्र.सू. ३.२.२२) इति सूत्राच्च । पालनाद्यर्थात्पिपर्तेः 'वादान्तशान्तपूर्णदस्तस्पष्टछन्नज्ञप्ताः' (पा.सू. ७.२.२८) इति निपातनात् साधुः । षाड्गुण्येन तदभिधेन ग्रन्थेन विशेषेण ग्रहो ज्ञानं यस्य स तथोक्तस्तत्सम्बुद्धिः । 'षाड्गुण्यनामा ग्रन्थस्तु षाड्गुण्यवचनं परम्' इति ऋग्भाष्यानुमानादिसिद्धः ।

---

१. 'इति' इत्यारभ्य 'भग इतीरणा इत्यन्तभागो' मुद्रितपुस्तके न दृश्यते ।

पर उत्तम आनन्दो यस्मात्स तथोक्तस्तत्सम्बुद्धिः । 'आनन्ददश्च मुक्तानाम्' (अनु.व्या. अ-१, पा.१, सू.१, श्लो.१५) इत्यनुव्याख्यानोक्तेः । परो लोकविलक्षण आनन्दो यस्येति वा । तदाह सूत्रे 'परमतः सेतून्मान-सम्बन्धभेदव्यपदेशेभ्यः' (ब्र.सू. ३.२.३२) इति ।।

परब्रह्मन्नित्यत्र परेति पदच्छेदः । परः स्वतन्त्रः तत्सम्बुद्धिः । 'परो हि पुरुषो विष्णुः' इत्यत्र ईक्षत्यधिकरणे (ब्र.सू. १.१.५-११) तत्त्वप्रकाशिकायां परशब्दस्य स्वतन्त्र इति व्याख्यानात् । तस्याभिधानमाह - **ब्रह्मन्निति** ।। पूर्णगुणेति तदर्थः । 'अथ कस्मादुच्यते ब्रह्मेति बृहंतो ह्यस्मिन् गुणाः' इति श्रुतेः । 'ब्रह्मदृष्टिरुत्कर्षात्' (ब्र.सू. ४.१.५) इत्यत्र सुधोक्तदिशा बृहतेर्मनिन् प्रत्यये दृशिग्रहणसामर्थ्यादिवामागमे नेड्वशिकृति(पा.७.२.८) इतीडभावे च रूपं ज्ञेयम् । अनेन 'तद्विजिज्ञासस्व तद् ब्रह्म' इति श्रुतिः स्तुत्ये वस्तुनि प्रमाणं ज्ञेयम् । अनेनैव 'अथातो ब्रह्मजिज्ञासा' (ब्र.सू.१.१.१) इति ब्रह्ममीमांसाशास्त्रविषयादिरीत्यारम्भणीयमिदमिति सूचितम् ।। ब्रह्मेति पाठे 'सम्बुद्धौ नपुंसकानां न लोपो वा वाच्यः' (वार्तिकम् - पा.सू. ७.१.८८) इति पाक्षिको नलोपो ज्ञेयः । हे चतुर अतिचतुर कुशलेत्यर्थः । नामरूपात्मकप्रपञ्चसर्जनातिकौशल्यं ज्ञेयम् । 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते' (चित्यु.१२.७ इति) श्रुतेः । 'एवं षोडशरूपोऽसौ चतुरात्मा व्यवस्थितः । महाचमसनामासौ यस्मादति चमत्कृतिः' (तै.भा. १.१०) इति तैत्तिरीयभाष्योक्तेश्च । आत्मने । स्वामिने । तदुक्तमनुव्याख्याने - 'आदानार्थत्वतश्चायमात्मशब्दः पतिं वदेत्' इति । तत्र सुधा ह्व "आङ्पूर्वाद्दाञ आतो मनिन् (पा.३.२.७४) इति मनिन् प्रत्यय आकारलोपो दस्य तत्त्वं च निर्वचनत्वात् । तथाचोक्तं - 'यच्चाप्नोति यदादत्ते' इत्यादि । 'पतिर्हि स्वीयतया भृत्यानादत्ते' इति । अनेन मुमुक्षुमात्रोपास्यो गुणोऽभिहितो ज्ञेयः । तदाह सूत्रे - 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र.सू. ४.१.३) इति । अथवाऽत्र पञ्चरात्रस्य वेदव्याख्यानतया 'तद्विजिज्ञासस्व तद्

ब्रह्म' इति श्रुतिगतब्रह्मशब्दस्य 'आत्मानमेव लोकमुपासीत' (बृह.१.४.१५) इति श्रुतिगतात्मशब्दस्य च व्याख्यानपराणीमानि सर्वाणि विशेषणानि ज्ञेयानि । अत एव न तेषामार्थिकं पौनरुक्त्यं स्तुतित्वाच्च । 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' इति । 'अत्र ह्येते सर्व एकीभवन्ति' इति च श्रुतिः । 'सर्वान् गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां न चैव' इति च स्मृतिः । यद्वा **चतुरात्मन** इत्येकं पदम् । चतुराणां कुशलानां सारासार-विवेकज्ञानिनामात्मा मनो यस्य स तेष्वात्मा मनो यस्येति वा तथोक्तस्तस्मै ते तुभ्यं नमः । 'नमः स्वस्ति' (पा.सू. २.३.१६) इत्यादिना चतुर्थी । एवमुत्तरत्रापि । अथवा ननु नाऽनिर्धारितस्वरूपस्य वन्दनं युक्तम् । न च लक्षणेन विना वस्तुनिर्धारणमित्यतो विभवात् स्तुत्यस्य वस्तुनोऽनेकानि लक्षणान्याहह्न **पूर्ण** इत्यादिना । एतेन 'देही चेदन्तवानेव यज्ञदत्तनिदर्शनात्' । अदेह-श्चेदनिच्छादिर्भवेच्छशविषाणवत्' ( अनुव्या.२.२.) इति परास्तम् । एतल्लक्षणं सम्भावनार्थमुक्तं **'पर'** इति । जडजीवप्रकृतिभ्योऽत्यन्तविलक्षणेत्यर्थः । यथा कामधेनुप्रभृतीनां लोकविलक्षणत्वात् प्रासादोद्गिरणादिकं नासम्भावितं तथास्यापि लोकविलक्षणत्वान्नोक्तलक्षणान्यसम्भावितानि इति भावः । एतैर्लक्षणैरनया च सम्भावनयान्वितं वस्तु कुतः प्रतिपत्तव्यमित्यतस्तत्र प्रमाणमाह - **'चतुरात्मन'** इति । चतुर्भिर्वेदेतिहासपञ्चरात्रमूलरामायणैरात्मने वेद्यायेत्यनेन तत्र वेदादिकं प्रमाणमुक्तं भवति तदुक्तम्- 'अखिलैः सुवाक्यै-राप्यतमम्' (ब्र.सू.अनु. १.१.१) इति । चतुःशब्दपूर्वादाप्नोतेर्बहुलग्रहणात् कर्मणि मनिन् । अत्र 'श्रृङ्गे कर्णे वा गृहीत्वा गामिव वेदादिकं न तद्वस्त्ववगम-यति । किं तु लक्षणमुखेनैव । लक्षणमपि नाऽप्रमितं लक्ष्यनिर्धारणस्येष्टे । सन्ति च तेऽर्थाः ये प्रमाणप्रमिता अप्यसम्भावनयाऽपोद्यन्ते । यथा देवगवामुत्तानानां वहनम् । अत्र च युगपदणुत्वमहत्वादीनामपवादो मा शङ्कि इति लक्षण-सम्भावनाप्रमाणानां त्रयाणामपि कथनं युक्तम्' । (वितत्त्व.नि.टी.) तदभिधानमभिधत्ते - **ब्रह्मन्निति** ।। **गुणपूर्ण** नारायणेत्यर्थः । रुद्र एवात्रोक्तं

ब्रह्म किं न स्यादित्यत आह - **पुण्डरीकाक्ष** इति ।। 'अमोघं पुण्डरीकाक्षम्' इति भगवान्नारायणः पुण्डरीकाक्षः प्रसिद्धः । रुद्रस्तु विरूपाक्ष इति नात्र स ब्रह्मपदोक्तो ज्ञेय इति भावः । तदुक्तं ऐतरेयभाष्ये - 'शिवो हि विरूपाक्षः । प्रसिद्धश्च पुण्डरीकाक्ष इति भगवान्नारायणः' इति । ब्रह्मनारायणशब्दयोरेकार्थत्वाच्च नारायण एवात्र ब्रह्मशब्दोक्तो ज्ञेय इत्यलं प्रपञ्चेन । एवं प्रकारान्तरेणाप्यस्य श्लोकस्य व्याख्यानानि द्रष्टव्यानि । विस्तरभियैवात्रोपरम्यते । अत्रादौ **जितन्त** इति यगणप्रयोगाच्छात्रादिसकलसम्पत्करमिदं स्तोत्रम् इति सूचितम् । तदुक्तं 'पुत्रं ददात्यखिलम्' इत्यादि । अत्र केचित् ब्रुवतेह 'ईश्वर एव नास्ति' इति । केचिदुक्तमङ्गीकृत्यापि 'निर्गुणं निराकारं जीवाभिन्नमवाच्यम् आचक्षते । एके तु जीवाद्भिन्नमाचक्षाणा अपि तमष्टगुणं सङ्गिरन्ते । अपरे तु तमस्वतन्त्रमा-तिष्ठन्ते । एतेनैते सर्वेऽपि यथायथं प्रत्युक्ताः ज्ञेयाः । ग्रन्थविस्तरभियैव नेह प्रपञ्च्यते ।। १ ।।

1. ಕಮಲದಂತೆ ಆಕರ್ಷಕ ಕಂಗಳುಳ್ಳವನೇ, ಜ್ಞಾನ-ವಿಜ್ಞಾನ ಮೊದಲಾದ ಮಂಗಲ ಗುಣಶರೀರನೇ, ಸಾಟಿ ಇಲ್ಲದ ಆನಂದದ ಸೆಲೆಯೇ, ವಿಶ್ವದ ಸೃಷ್ಟಿ-ಸ್ಥಿತಿ-ಲಯ ಕಾರಣನಾಗಿ 'ಪರಬ್ರಹ್ಮ' ಎನಿಸಿದವನೇ, ಎಲ್ಲ ವಿಶ್ವದ ಒಡೆಯನೂ ದುರ್ಜನ ದಮನಕಾರಿಯೂ ಆದ ಓ ನಾರಾಯಣನೇ! ನಿನಗೆ ನಮನಗಳು.

1. Oh Lord ! the one having lotus-like attractive eyes, the very embodiment of auspicious unique attributes, the abode of matchless bliss, the Lord of the universe, destroyer of all vices and the wicked, Oh. Narayana, to you I prostrate.

**नमस्ते पीतवसन नमः कटकहारिणे ।**
**नमो नीलालकाबद्धवेणीसुन्दरपुङ्गव ।। २ ।।**

**कटकहारिणे** ।। कटकस्य कुरुसैन्यस्य हारिणे संहर्त्रे । यद्वा कटको वलयः स च हारश्च तावस्य स्त इति तथोक्तस्तस्मै । 'भूभृन्नितम्बवलयचक्रेषु वलयोऽस्त्रियाम्' इत्यमरः । 'हारो मुक्तावलिः' इति च अमरः । नीलैरलकै-

श्चूर्णकुन्तलैराबद्धा वेण्यः केशपाशा यस्याः सा तथोक्ता लक्ष्मीः । 'चतुः-शिखण्डा युवतिः सुपेशा चतुष्कपर्दा युवतिः सुपेशा' ( गी.भा. १२-१ उदाहृतश्रुतिः) इति च श्रुतेः । तस्याः सुन्दरपुङ्गवः पुमांश्चासौ गौश्च पुङ्गवः वृषभश्रेष्ठ इत्यर्थः । 'गोरतद्धितलुकि' (पा.५.४.९२) गोशब्दादृच् सुन्दरश्चासौ पुङ्गवश्च तथोक्तस्तत्सम्बुद्धिः । यत इति यावत् ।। २ ।।

2. ಓ ಪೀತಾಂಬರಧಾರಿಯೇ ಬಳೆ-ಹಾರಗಳಿಂದ ಅಲಂಕೃತನೇ, ಕಪ್ಪುಬಣ್ಣದ ಕೇಶರಾಶಿಯಿಂದ ನಾಲ್ಕು ಜಡೆ ಹೆಣೆದುಕೊಂಡ ಲಕುಮಿಯರಸನೇ ನಿನಗೆ ನಮನಗಳು.

2. Oh Lord, robed in the finest yellow silks, ornamented with bracelets and necklaces, Lord of Lakshmi who is having two pairs of plaits, adores you everywhere, always . To you, I prostrate again and again.

**स्फुरद्वलयकेयूरनूपुराङ्गदभूषणैः ।**
**शोभनैर्भूषिताकारकल्याणगुणराशये ।। ३ ।।**

वलये च केयूरे च नूपुरे च अङ्गदे च वलयकेयूरनूपुरांगदानि । तानि च तानि भूषणानि च स्फुरन्ति च तानि वलयकेयूरनूपुराङ्गदभूषणानि च तैरित्यर्थः । यद्यपि कटकवलयशब्दौ पर्यायौ । तथा च अमरः - 'कटको वलयोऽस्त्रियाम्' इति । तथाप्यत्र वलयपदेन पादकटकग्रहणं पूर्वत्र कटकशब्देन तु हस्तकटक-ग्रहणमिति न पौनरुक्त्यम् । एवं 'केयूरमङ्गदं तुल्ये' इति केयूराङ्गदयोः पर्यायत्वेऽप्यत्र केयूरपदेन पादाङ्गदस्याङ्गदपदेन हस्ताङ्गदस्य ग्रहणं विवक्षित-मिति न पौनरुक्त्यमिति ज्ञेयम् । तथा च अमरः - 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्' इति । कल्याणानां शोभनानां गुणानां राशिर्यस्मिन् स तथोक्तस्तस्मै 'सप्तमीविशेषणे बहुव्रीहौ' (पा.सू.२.२.३५) इति ज्ञापकाद् व्यधिकरणो बहुव्रीहिः । दुःखादीनामपि गुणत्वेन तार्किकाणां व्यवहारात्कल्याणेति । पूर्णषाड्गुण्यविग्रहेत्यत्र 'एवं धर्मान् पृथक् पश्यन् तानेवानुविधावति' (कठ.४.१४) इति श्रुतिसिद्धेः गुणविग्रहयोरभेदो

विवक्षितः । अत्र तु उक्तं '[१]उक्त्वा धर्मान् पृथक्त्वस्य निषेधादत एव हि । विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः' इत्युक्तभेदप्रतिनिधिविशेषबलात् भेदव्यवहारो विवक्षित इति भेदः । तदाह सूत्रे - उभयव्यपदेशात्त्वहिकुण्डलवत्' (ब्र.सू. ३.२.२८) इति ।। ३ ।।

3. ಹೊಳೆಯುವ ಕಾಲ್ಬಳೆ,ವಂಕಿ (ತೋಳಿನ ಆಭರಣ) ಕಾಲ್ಗೆಜ್ಜೆ, ಕೈಬಳೆಗಳಿಂದ ವಿಭೂಷಿತನಾದ, ಮಂಗಲಗುಣರೂಪಿಯಾದ ನಿನಗೆ ನಮನಗಳು.

3. Oh Lord, having the brightest and tinkling bells of anklets, bracelets, having all matchless attributes, I Prostrate to you again and again.

**करुणापूर्णहृदय शङ्खचक्रगदाधर ।**
**अमृतानन्दपूर्णाभ्यां लोचनाभ्यां विलोकय ।। ४ ।।**

**कृशं कृतघ्नं दुष्कर्मकारिणं पापभाजनम् ।**
**अपराधसहस्राणामाकरं करुणाकर ।**
**कृपया मां केवलया गृहाण मधुराधिप ।। ५ ।।**

स्वेष्टमधुना आशास्ते - **अमृत** इति ।। आनन्दस्य इदमानन्दम् आनन्दशब्दात्तस्येदमित्यण् । आनन्दं च तदमृतं अमृतानन्दम् । 'कडाराः कर्मधारये' (पा.सू.२-२-३८) इत्यमृतशब्दस्य पूर्वनिपातः । तेन पूर्णाभ्याम् इत्यर्थः । 'पयः कीलालममृतम्' इत्यमरः ।। ४ ।।

पापभाजनमित्यत्र हेतुः - **दुष्कर्मकारिणम्** इति ।। 'पात्रं च भाजनम्' इत्यमरः ।

केवलया कृपयेति न ग्रहणे मदीयं साधनं हेतुरिति हृदयम् । 'यमेवैष वृणुते तेन लभ्य' (कठ . २.२२) इति श्रुतेः ।। ५ ।।

---

१. 'उक्तधर्माणामपृथक्तस्य' इति मुद्रितपुस्तके ।

4. ಬಗೆಯೊಳು ಕರುಣೆ ತುಂಬಿಕೊಂಡವನೇ ! ಶಂಖ-ಚಕ್ರ-ಗದಾ-ಪದ್ಮ ಧರಿಸಿದವನೇ ಅಮೃತ-ಆನಂದಗಳನ್ನು ಹರಿಸುವ ನಿನ್ನ ಕಂಗಳಿಂದ ನನ್ನನ್ನು ಅವಲೋಕಿಸು (ನೋಡು)

5. ಓ ಕರುಣಾಮಯನಾದ ಶ್ರೀಕೃಷ್ಣನೇ ! ದುರ್ಬಲನೂ, ಮಾಡಿದ ಉಪಕಾರವನ್ನು ಮರೆಯುವವನೂ, ನಿಷಿದ್ಧಕಾರ್ಯಗಳಲ್ಲಿ ತೊಡಗುವ ಕಾರಣದಿಂದ ಪಾಪಿಷ್ಠನೂ, ಸಾವಿರಾರು ಅಪರಾಧಗಳ ತಾಣನೂ ಆದ ನನ್ನನ್ನು ಕೇವಲ ಕೃಪೆಯಿಂದ ಅನುಗ್ರಹಿಸು.

4. You are over-filled with kindness for your devotees, holding Shanka, Chakra,Gada and Padma. Look at me and bless with a glance of your blissful eyes.

5. Oh Lord Krishna, the embodiment of kindness, I am the worst sinner, weak, ungrateful, always entangled in totally prohibitted acts, in the hell of thousands of sins. Kindly include me in the list of your devotees.

**विषयार्णवमग्नं मामुद्धर्तुं त्वमिहार्हसि ।**
**पिता माता सुहृद्बन्धुर्भ्राता पुत्रस्त्वमेव मे ।**
**विद्या धनं च कामश्च नान्यत्किञ्चित्त्वया विना ।। ६ ।।**

ननु विषयार्णवमग्नस्य कृपयापि कथं ग्रहणम् ? न चोद्धरिष्य इति वाच्यम् । तत्राशक्तत्वात्तवेत्याशङ्कां निरस्यति - **विषय** इति ।

मद्विषयकृपायां त्वयि लोकसिद्धनिमित्तपौष्कल्यम् अस्तीत्याह - **पिता** इति ।। पित्रादिस्त्वमेव मे मुख्यतः । पालनात् पिता । 'पालनात् पितृनामासौ' (महैतरेय.भा. द्वितीय प्रघट्ट अ.७,मं.७) इति महैतरेयभाष्योक्तेः । 'यो नः पिता जनिता' इति श्रुतेश्च माता हिताहितज्ञानी । सुहृत् । 'निर्निमित्तस्नेहवान् सुहृत्' इति गीतातात्पर्ययोक्तेः । बन्धुः 'उद्धरेतैव संसाराज्जीवात्मानं परात्मना । विष्णुर्बन्धुः सतां नित्यम्' (गी.ता. ६.५) इति गीतातात्पर्योदाहृतस्मृतेः । भ्राता एकस्मिन् देहे निवासात् । 'देहे तु एकस्मिन् गर्भवत् वासतश्च भ्राताऽस्य जीवः परमस्य नित्यम्' (२.३१.१९६) इति ऋग्भाष्योक्तेः । जीवस्य भगवद्भ्रातृत्वाद्भगवतोऽपि जीवभ्रातृत्वं ज्ञेयम् । पुन्नाम्नो नरकात् त्राणात्पुत्रः ।

अस्यैव मुख्यतो नरकात् त्रातृत्वात् । 'नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति सखेति च' इति श्रुतेः । एनं हरिमित्यप्यत्रार्थः । विद्या ज्ञप्तिस्वरूपः । 'विद्या ज्ञप्तिस्वरूपत्वात्' (गी.ता.१०.३२ ) इति गीतातात्पर्योक्तेः । अन्यदिति सामान्ये नपुंसकम् अन्यदमुख्यमिति भावः ।। ६ ।।

6. ವಿಷಯ (ಭೋಗವಸ್ತುಗಳ) ಸಾಗರದಲ್ಲಿ ಮುಳುಗಿದ ನನ್ನನ್ನು ನೀನೇ ಉದ್ಧರಿಸಬೇಕು. ಏಕೆಂದರೆ, ನೀನು ಎನ್ನ ತಂದೆ, ತಾಯಿ, ಪ್ರತ್ಯುಪಕಾರವನ್ನು ಬಯಸದೆಯೇ ಉಪಕರಿಸುವವ (ಸುಹೃತ್) ಬಂಧು, ಭ್ರಾತಾ (ಅಣ್ಣ), ಪುತ್ರ (ಮಗ)- ಹೀಗೆ ನೀನೇ ಸರ್ವಸ್ವವಾಗಿರುವಿ. ವಿದ್ಯಾ-ಸಂಪತ್ತು-ಇಷ್ಟಾರ್ಥಸಿದ್ಧಿ ಎಲ್ಲವೂ ನಿನ್ನ ಅಧೀನವಾಗಿದೆ. ನಿನ್ನ ಒಲುಮೆ ಇಲ್ಲದ ನನ್ನ ಅಸ್ತಿತ್ವವನ್ನು ಕಲ್ಪಿಸಿಕೊಳ್ಳಲೂ ಸಾಧ್ಯವಿಲ್ಲ.

6. I have been in chase of worldly desires, always after materialistic wealth. You have to save me out of this desire . You are my father, mother, friend and guide - you are all-in-all. You have all the virtues. I have all the vices. Everyone and everything is in your control. My knowledge, prosperity and my success all depend on you totally. I can not even imagine of my existance without your blessings.

यत्र कुत्र कुले वासो येषु केषु भवोऽस्तु मे ।
तव दास्यैकभावे स्यात्सदा सर्वत्र मे रतिः ।। ७ ।।

मनसा कर्मणा वाचा शिरसा वा कथञ्चन ।
त्वां विना नान्यमुद्दिश्य करिष्ये किञ्चिदप्यहम् ।। ८ ।।

पाहि पाहि जगन्नाथ कृपया भक्तवत्सल ।
अनाथोऽहमधन्योऽहमकृतार्थो ह्यकिञ्चनः ।। ९ ।।

नृशंसः पापकृत् क्रूरो वञ्चको निष्ठुरः शठः ।
भवार्णवनिमग्नं मामनन्यकरुणोदधे[1] ।
करुणापूर्णदृष्टिभ्यां दीनं मामवलोकय ।। १० ।।

१. 'करुणानिधे' ख.

लोकदृष्ट्यनुसारेण स्वग्रहणकारणकृपाविषयत्वनिमित्तं तस्मिन् प्रार्थयते - **यत्र** इति । भावो जन्म केवलं दास्यं दास्यैकम् । 'दोषैकदृक्' इत्यादिप्रयोगात् सङ्ख्यार्थकस्यैवैकशब्दस्य पूर्वनिपातो न केवलार्थस्य । तस्मिन् भावोऽतिवासना। 'भावना त्वतिवासना'(गी.भा.८.७) इति गीताभाष्योदाहृतवचनात् । यद्वा दास्यं च एकभाव एकत्वम् अवताराणामैक्यं चेति यावत् । प्राधान्यं वा दास्यैकभावम् तस्मिन् । सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः । 'नेह नानास्ति किञ्चन' (कठ. ४.१२ ) इति श्रुतेः । रतिः सर्वत्र सर्वदेशे सदा स्यादित्यर्थः । न तु क्वचित् कदाचित् दास्यैकभावरतिः कृपाहेतुः इति भावः ।। ७ ।।

इतोऽपि ग्रहाणेत्यभिप्रेत्याह - **मनसा** इति । कथञ्चन कथमपि ।। ८ ।।

ग्रहणोपयोगिपालनं प्रार्थयते - **पाहि पाहि** इति ।। भक्तेरिव प्रसादापरपर्यायकृपाया अपि विविधत्वान्न कश्चिद्दोष इति ज्ञेयम् । पुनरादरातिशयेन स्वस्वभावविज्ञापनपूर्वकं कृपावलोकं प्रार्थयते - **अनाथ** इति । सत्यपि स्वामिन्यरक्षत्यनाथः । अधन्यः असुकृती । 'सुकृती पुण्यवान् धन्यः' इत्यमरः । यद्वा अधन्यः अनुत्तमः नीच इति यावत् । 'त्वं धन्यस्त्वमीश्वरः' इति श्रीकृष्णं प्रति नारदोक्तवाक्यस्थधन्यपदस्य 'कूर्मो दृष्टो विष्णुपद्यां मयोक्तस्त्वमुत्तमो नास्ति समस्तवेति' (म.ता.नि.२०.६७) इत्याचार्यैर्निर्णये उत्तमार्थतया व्याख्यानात् । अकृतोऽसम्पादितोऽर्थः पुरुषार्थो धर्मादिर्येन स तथोक्तः ।। ९ ।।

'नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः' इत्यमरः । क्रूरो निर्दयः 'क्रूरौ कठिननिर्दयौ' इत्यमरः । शठो गूढद्वेषी । अन्यफलकामनया प्राधान्येनान्यदेवतापूजनाभ्यां रहिता अनन्याः तेषु करुणयोदधिरिवोदधिस्तत्सम्बुद्धिः । अनन्यशब्दस्योक्तोऽर्थस्तु 'सर्वं परित्यज्य मनोगतांस्तद्विना देवं केवलं शुद्धमाद्यम् । ये चिन्तयन्तीह त एव धीरा अनन्यास्ते देवमाविशन्ति' इति

काठकभाष्योक्तदिशा जीवेश्वराभेदज्ञानी वाऽनन्यः । शिष्टं समम् । 'करुणानिधे' इति पाठे करुणाया निधिः शेवधिरिव निधिरित्यर्थो द्रष्टव्यः । 'निधिर्नाशेवधिः स्त्रियाम्' इत्यमरः ।

**अवलोकय** इति । अव लोकय इति च्छेदः । अव पाहि । 'अव रक्षण' इति धातोः लोकय पश्य । 'लोकृ दर्शन' इत्यतः स्वार्थे णिच् ।। एतेन क्रियाभेदेन कर्मभेदान्नैकस्य मामित्यस्य वैय्यर्थ्यम् इति शङ्कावकाशः ।।१०।।

7. ಯಾವ ಕುಲದಲ್ಲೇ ಜನಿಸಲಿ; ಯಾವುದೇ ಸ್ಥಳದಲ್ಲೆ ವಾಸಿಸಲಿ. ಕೇವಲ ನಿನ್ನ ದಾಸ್ಯದಲ್ಲಿ ನನ್ನ ಮನ ನೆಲೆಗೊಳ್ಳಲಿ.

8. ಮನಸ್ಸಿನಿಂದಾಗಲೀ ಕರ್ಮದಿಂದಲಾಗಲೀ ಮಾತಿನಿಂದಾಗಲೀ ಒಟ್ಟಾರೆ ಸಕಲ ಇಂದ್ರಿಯಗಳಿಂದ ನಿನ್ನ ಒಲುಮೆ ಸಾಧಿಸುವುದೇ ನನ್ನ ಹೆಗ್ಗುರಿ.

9. ಓ ವಿಶ್ವದ ಅರಸನೇ! ಭಕ್ತವತ್ಸಲನಾದ ನೀನು ಕೃಪೆಯಿಂದ ನನ್ನನ್ನು ರಕ್ಷಿಸು. ನನಗೆ ನೀನಲ್ಲದೇ ಬೇರಾರೂ ಒಡೆಯರಿಲ್ಲ. ಪುಣ್ಯಕಾರ್ಯಗಳನ್ನು ಮಾಡಿದವನಲ್ಲ. ಪುರುಷಾರ್ಥಸಾಧನೆಗೆ ತೊಡಗಿದವನಲ್ಲ. ಕಡು ಬಡವನು. ಇರಲಿ ನನ್ನ ಮೇಲೆ ನಿನ್ನ ಕೃಪೆ.

10. ನಾನು ಕೃತಘ್ನನು-ಪಾಪಿಷ್ಠನು-ಕ್ರೂರಿ-ಮೋಸಗಾರ-ನಿಷ್ಠುರಭಾಷಿ-ಮೂರ್ಖನಾಗಿರುವೆ. ಕರುಣಾಸಾಗರನಾದ ನೀನು, ಸಂಸಾರಸಾಗರದಲ್ಲಿ ಮುಳುಗಿದ ದೀನನಾದ ನನ್ನೆಡೆ ಕರುಣೆಯಿಂದ ವೀಕ್ಷಿಸು. 7-10

7. No matter where I am born, or from whom I come, no matter where I stay or live, let my mind be bound by your grace for ever, at your service.

8. My ultimate aim is to serve you by my thoughts, by words and by my actions. Let all my sensory organs and mind be totally embedded in you.

9. Oh Lord of the Universel ! Being the incarnate of kindness and protection of your devotees ! Kindly protect me. You are the master , none else. I have never involved through- out my life in any act which pleases you; I have not even made an honest attempt anytime to deserve your kindness. I am the poorest in every sense of the word. Bless me. Protect me. Shower on me your kindness.

10. I am an ungrateful wretch, sinner of the worst order, a cheat, cruel and harsh in my words. Above all I am an idiot and stupid. Oh ! Lord, only your kindness can lift me from this deep darkness of hell of sins. Being kind, look at me with sympathy. Let your kindness flow towards me. 7-10

**त्वदग्रे पतितं त्यक्तुं तावकं नार्हसि प्रभो ।**
**मया कृतानि पापानि त्रिविधानि पुनः पुनः ।**
**त्वत्पादपङ्कजं प्राप्तुं नान्यत्त्वत्करुणां विना ।। ११ ।।**

त्वदग्रे पतितमित्यत्र हेतुमाह- **मया** इति ।। अग्रे पतितस्य पादपङ्कजप्राप्तिः किं सुलभेत्यतस्तस्याः करुणैकसाध्यत्वमाह - **त्वत्पादपङ्कजम्** इति ।।११।।

**साधनानि प्रसिद्धानि यागादीन्यब्जलोचन ।**
**त्वदाज्ञया प्रवृत्तानि त्वामुद्दिश्य कृतानि वै ।। १२ ।।**

'अमृतो वाव सोमपो भवति' इति श्रुतेर्यागादिभिः साधनैः पादपङ्कजं प्राप्नुहि किं करुणयेत्यत आह - **त्वदाज्ञया** इति ।। 'श्रुतिस्मृती हरेराज्ञे' इति वचनात् । श्रुत्यादिरूपत्वदाज्ञया प्रवृत्तानि प्रसिद्धानि यागादीनि साधनानि त्वामुद्दिश्यैव कृतानि । त्वत्प्रीतिमुद्दिश्यैव कृतानि । न तु पादपङ्कजं प्राप्तुमित्यर्थः । करुणैव प्रसादरूपा आवश्यकीति भावः । 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते ।नापरेण' (तत्त्व.उ.श्रुति) इति श्रुतेः 'मां विधत्तेऽभिधत्ते माम्' (भा. ११.२२.४३) इति स्मृतेः ।। १२ ।।

11. ನಾನು ನಿನ್ನವ, ನಿನ್ನ ಪಾದಗಳಿಗೆ ಶರಣಾಗತನಾಗಿರುವೆ, ಮನೋ-ವಾಕ್-ಕಾಯಗಳಿಂದ ನಾನು ಮತ್ತೆ ಮತ್ತೆ ಪಾಪಗಳನ್ನು ಮಾಡಿರುವೆ. ನಿನ್ನ ಕರುಣೆಯೊಂದೇ ನಿನ್ನ ಬಳಿ ಬರಲು ಎನಗಿರುವ ಉಪಾಯ.

12. ನಿನ್ನ ಆದೇಶರೂಪವಾದ ವೇದಶಾಸ್ತ್ರಗಳು ಹೇಳಿದಂತೆ ಯಜ್ಞಾದಿಗಳನ್ನು ನಿನ್ನ ಪ್ರೀತಿಗಾಗಿ ಮಾಡಿರುವೆ. ಆದರೂ ಮುಕ್ತಿಗಾಗಿ ನಾನು ಮಾಡಿದ ಸಾಧನೆ ಅತ್ಯಲ್ಪ. ನಿನ್ನ ಕರುಣೆಯಿಲ್ಲದೇ ಭವ ನೀಗದು. 11-12

11. I am totally yours. I have surrendered myself to you completely. By thoughts, by words, and by actions I have committed unpardonable sins. My only hope is in your kindness, which makes me to run to you.

12. Whatever the small sacrifices I have made and the worship I have made rarely they are full of lapses. They are not at all in accordance with the injunctions of the scriptures. My acts of service are not enough to reach the path of my emancipation, to get a release from this sorrow-filled cycle of life and death.11&12

**भक्त्यैकलभ्यः पुरुषोत्तमो हि जगत्प्रसूतिस्थितिनाशहेतुः ।**
**अकिञ्चनं नान्यगतिं शरण्यं गृहाण मां क्लेशिनमम्बुजाक्ष ॥ १३ ॥**

तर्हि बहुवित्तव्ययवत्वेनायाससाध्ययज्ञादेरकिञ्चनेन मया कर्तुमशक्यतया तत्साध्यकरुणा दुःसम्पादेत्यतस्तस्या अकिञ्चनसाधारणमन्तरङ्गसाधनं प्रार्थयते- **भक्तैकलभ्य** इति । पुरुषोत्तम इत्यत्र 'पञ्चमी भयेन' (पा.सू. २.१.३७) इत्यत्र योगविभागात्पञ्चमीसमासो ज्ञेयः । न विद्यते अन्या गतिर्यस्य स तथोक्तः । अकिञ्चनश्चसावनन्यगतिश्च तथोक्तस्तम् इत्यर्थः । गृहाण भक्ततया स्वीकुरु । भक्तिं दिशेति भावः । 'यमेवैष वृणुते तेन लभ्यः' (कठो.उ.२-२, मुण्डक.३.२.३) इति श्रुतेः ॥ १३ ॥

13. ವಿಶ್ವದ ಹುಟ್ಟು-ರಕ್ಷಣೆ-ವಿನಾಶಗಳಿಗೆ ಕಾರಣನಾದ ಸರ್ವೋತ್ತಮ ಶ್ರೀಹರಿಯೇ, ನೀನು ಕೇವಲ ಭಕ್ತಿಯಿಂದ ಒಲಿಯುವನು. ಹೇ ಪುಂಡರೀಕಾಕ್ಷನೆ! ಸಂಸಾರದಲ್ಲಿ ನೊಂದು ನಿನಗೆ ಶರಣಾಗತನಾಗಿರುವೆ. ಅಲ್ಪನಾದ ನನಗೆ ಬೇರಾರೂ ರಕ್ಷಕರಿಲ್ಲ. ನನ್ನನ್ನು ನಿನ್ನವನಾಗಿ ಸ್ವೀಕರಿಸು.

13. You are always the cause of creation, sustenance, and destruction of this universe, being the supreme. You can be pleased with pure devotion only. Oh! Lotus-eyed Lord, I have been terribly let down and I am dejected in life. I surrender totally at your feet prostrating again and again. For the helpless one like me,

there is none in whom I can take refuge, and from whom I can seek protection. Accept me as your own.

**धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन ।**
**त्वत्पादपङ्कजस्याधो जीवितं मम दीयताम् ॥ १४ ॥**

'एकान्तानां न कस्यचित् अर्थे नारायणो देवः सर्वमन्यत् तदर्थकम्' (गी.भा. ७.२९) इति गीताभाष्योदाहृतप्रमाणानुसारेण अधुना वेधाः स्वप्रार्थना-प्रकारमाह - **धर्मार्थेति** । ममेति शेषे षष्ठी ॥ १४ ॥

14. ಧರ್ಮ-ಅರ್ಥ-ಕಾಮ-ಮೋಕ್ಷಗಳನ್ನೂ ನಾ ಬೇಡೆನು. ನಿನ್ನ ಪಾದಕಮಲಗಳ ಆರಾಧನೆಯ ಬದುಕು ನನಗಿರಲಿ.

14. I do not beg from you for righteousness, riches, desire of liberation. Let my life totally be dedicated to your service.

**कामये तावकत्वेन परिचर्यासु वर्तनम् ।**
**नित्यं किङ्करभावेन परिगृह्णीष्व मां विभो ॥ १५ ॥**

त्वत्पादपङ्कजस्याधो इत्येतद्विवृणोति – **कामय** इति । १५ ।

**लोकं वैकुण्ठनामानं दिव्यं षड्गुणसंयुतम् ।**
**अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥ १६ ॥**

'तस्याभिध्यानात् योजनात् तत्त्वभावात् भूयंश्चान्ते विश्वमायानिवृत्तिः' (श्वेता. उ. १.१०, ना. प. ९.९) इति श्रुतेः भगवति मनो युञ्जन्नादौ तल्लोके वैकुण्ठे मनोयोगमाह - **लोकम्** इति ॥ षड्गुणेन भगवता सम्युतं युक्तम् । अवैष्णवानामिति कृत्यानां कर्तरि वा (पा.सू.२.३.७१) इति षष्ठी । अवैष्णवैर्विष्णुभक्तिविवर्जितैरप्राप्यम् इत्यर्थः । **गुणत्रयविवर्जितः** सत्त्वादिगुणत्रयरहितः । 'श्रीरेव लोकरूपेण विष्णोस्तिष्ठति सर्वदा । अतो हि वैष्णवा लोकाःनित्यास्ते चेतना अपि' (गी.ता. १८.६२) इति गीता-तात्पर्योदाहृतवचनेन तस्य लक्ष्म्यात्मकत्वावगमात् इति भावः ॥ १६ ॥

15. ನಿನ್ನ ಸೇವಕ ವರ್ಗದಲ್ಲಿ ನನ್ನನ್ನು ಒಬ್ಬನನ್ನಾಗಿ ಸ್ವೀಕರಿಸು. ನಾನು ನಿನ್ನ ಸೇವೆಗೆ ಸದಾ ಸಿದ್ಧನಿರುವೆ.

16. ಸಿರಿದೇವಿಯೇ ವಿಷ್ಣುಭಕ್ತರಿಗೆ ಮುದ ನೀಡಲು ವೈಕುಂಠವಾಗಿ ಮೈದಳೆದಿದ್ದಾಳೆ. ವೈಕುಂಠವು ಪರಮಾತ್ಮನಂತಿದೆ. ಇಲ್ಲಿ ಸತ್ತ್ವ-ರಜಸ್- ತಮೋಗುಣಗಳ ಕೆಲಸವಿಲ್ಲ (ಅಪ್ರಾಕೃತವಾಗಿದೆ). ಇದು ವೈಷ್ಣವರಲ್ಲದವರಿಗೆ ದೊರಕದು.

15. Oh Lord ! Be kind enough to include me in your long list of servants. I am ever ready to serve you.

16. Mother Lakshmi embodiment of all riches has transformed herself as Vaikunta, to give the happiness and Joy to the devotees of Vishnu. Vaikunta can never be reached by souls other than the devotees of Vishnu. Vaikunta is like the Lord Vishnu, Where the trace of Satwa, Rajas and Tamas of the universe can never reach, as they have no role to play there.

**नित्यसिद्धैः समाकीर्णं त्वन्मयैः पाञ्चकालिकैः ।**
**सभाप्रासादसंयुक्तं वनैश्चोपवनैः शुभैः ॥ १७ ॥**

अत एव नित्यसिद्धैः उत्पत्तित एवाधिगतपरतत्त्वैः अणिमादिसिद्धिमद्भिर्वा देवविशेषैर्वा नित्यं समाकीर्णं युक्तम् । [१]कीदृशैः सिद्धैः पाञ्चकालिकैः प्रातः-सङ्गवमध्याह्नापराह्णसायाह्नभेदेन पञ्चसु कालेषु भवैः [२]कालाठ्ठञ् (४.३.११) त्वन्मयैः त्वत् प्राधान्यविद्भिः । 'मयं प्रधानमुद्दिष्टं प्राधान्यं यैहरिर्मतम् । भगवन् मयास्ते विज्ञेयास्ते मुच्यन्ते न चापरै' (गी.ता. ४.११) इति गीता-तात्पर्योदाहृतवचनात् अयमेवार्थः ॥ १७ ॥

17. ಅಣಿಮಾದಿ ಸಿದ್ಧಿಗಳುಳ್ಳ ದೇವತೆಗಳಿಂದ ವೈಕುಂಠವು ಶೋಭಿಸುತ್ತಿದೆ. ನಿನ್ನ ಮಹಿಮೆಯರಿತ ಸಿದ್ಧ ಸುಜನರು ಅಲ್ಲಿದ್ದಾರೆ. ವಿಶಾಲವಾದ ಸಭಾಭವನ-ಉಪ್ಪರಿಗೆಗಳಿಂದ ವನ-ಉಪವನಗಳಿಂದ ಕಂಗೊಳಿಸುತ್ತಿದೆ.

17. Vaikunta dazzles with all brightness of the achievements with Anima (The Smallest) Mahima (the biggest) etc acquired by

---

१. कीर्णैः मु. २. शालाट्टञ्. मु.

the deities. These are the souls who know your auspicious attributes realatively in accordance with their merits. Vaikunta is full of spacious mansions, sky kissing towers, beautiful gardens and ever green parks.

**वापीकूपतटाकैश्च वृक्षखण्डैः सुमण्डितम् ।**
**अप्राकृतसुरैर्वन्द्यमयुतार्कसमप्रभम् ॥ १८ ॥**

मण्डितं लोकं कदा द्रक्ष्यामीत्युत्तरेणान्वयः । प्रकृतेर्जडप्रकृतेर्विकाराः प्राकृताः । न विद्यन्ते प्राकृता देहादयो यस्मिन् यस्य वा तथोक्तम् । सुरैर्वन्द्यं स्तुत्यं नम्यं च । अयुतेत्युपलक्षणम् । 'सूर्यकोटिप्रतीकाशम्' इत्यादेः ॥ १८ ॥

18. ವಾಪೀ (ಇಳಿದು ಸ್ನಾನ ಮಾಡುವ ಜಲಾಶಯ) ಕೂಪ (ರಾಟೆಯಿಂದ ನೀರು ಸೇದುವ ಜಲಾಶಯ) ತಟಾಕ (ಏಕಕಾಲದಲ್ಲಿ ಹತ್ತಾರು ಮಂದಿ ಇಳಿದು ಸ್ನಾನಮಾಡುವ ಜಲಾಶಯ) ಮತ್ತು ಸುಂದರವಾದ ಮರಗಳಿಂದ ವೈಕುಂಠವು ಶೋಭಿಸುತ್ತಿದೆ. ಮುಕ್ತರಾದ ದೇವತೆಗಳಿಂದ ಪೂಜಿತವಾದುದು. ಹತ್ತು ಸಾವಿರ ಸೂರ್ಯರ ಪ್ರಭೆಯಿಂದ ಕಂಗೊಳಿಸುವಂತಹುದು.

18. There are crystal-clear ponds where one can get in and have a bath. There are wells from which water can be dragged easily and there are big lakes where many, tens of people can bathe at a time. It is glorified with green lustruous healthy huge trees. It is worshipped by many liberated deities and souls. It dazzles with brightness as if by tens of thousands of suns at a time.

**प्रकृष्टसत्त्वराशिं त्वां कदा द्रक्ष्यामि चक्षुषा ।**
**क्रीडन्तं रमया सार्धं लीलाभूमिषु केशवम् ॥ १९ ॥**

प्रकृष्टानां सत्त्वानां प्राणिनां राशिर्यस्य स तथोक्तस्तम् । 'मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत' (ऋ.१०.१०.१३, चित्युप.१२.६) इति श्रुतेः ।

'मूर्धैव सुतेजाश्चचक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा' इति श्रुतेश्च त्वां कदा द्रक्ष्यामीत्यर्थः । अथवा विकुण्ठाया अपत्यतया वैकुण्ठनामानं सभाप्रासादादि-भिस्तन्नामकभगवद्रूपविशेषैर्वा तत्तदभिमानिदेवविशेषैर्वा मण्डितं वैकुण्ठनामानं

लोकं स्वरूपं कदा चक्षुषा द्रक्ष्यामीति लोकं वैकुण्ठनामानमित्यादेरर्थो ज्ञेयः । 'आत्मानमेव लोकमुपासीत' इत्यत्र लोकशब्दस्य स्वरूपपरतया ऐतरेयभाष्ये व्याख्यानात् । शिष्टं प्राग्वत् । 'पर्वताः सिकताश्चैव नद्यः कूपाः सरांसि च । हविः कपालकूपाद्या देवता एव सर्वशः । तत्तन्नामैव नामैषाम् । भिन्नानामभिमानतः । नामानि तान्यपि हरेः स हि सर्वगुणाधिकः' (बृ.भा. अ-३, ब्रा-१, मं-१) इति बृहद्भाष्योक्तेः सभादयो भगवद्रूपविशेषदेवताश्च ज्ञेयाः । 'स्वमूर्तिगणमध्यगः' इत्यादेः ।। १९ ।।

19. ಉತ್ಕೃಷ್ಟರಾದ ದೇವತೆಗಳ ಆವಾಸಭೂಮಿಯಾದ ಶ್ರೀಹರಿಯೇ ರಮೆಯೊಡನೆ ವಿಹರಿಸುವ ನಿನ್ನನ್ನು ಯಾವಾಗ ನಾನು ನೋಡುವೆನೋ?

19. Oh ! Lord you are the abode of all deities . Oh ! when can I see you sporting with your consort Rama (Laksmi)

**मेघश्यामं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ।**
**उन्नसं चारुदशनं बिम्बोष्ठं [१]शोभनाननम् ।। २० ।।**

**विशालवक्षसं श्रीशं कम्बुग्रीवं जगद्गुरुम् ।**
**आजानुबाहुपरिघमुन्नतांसं मधुद्विषम् ।। २१ ।।**

**तनूदरं निम्ननाभिमापीनजघनं हरिम् ।**
**करभोरुं श्रियः कान्तं कदा द्रक्ष्यामि चक्षुषा ।। २२ ।।**

**शङ्खचक्रगदापद्मैरङ्कितं पादपङ्कजम् ।**
**शरच्चन्द्रशताक्रान्तनखराजिविराजितम् ।। २३ ।।**

उन्नसम् उत्कृष्टा नासिका यस्य स तथोक्तः तम् । उपसर्गाच्च इति समासान्तो अच् । नासिकाशब्दस्य नसादेशश्च ।। २०-२३ ।।

20. ಕಪ್ಪು ಬಣ್ಣದ ಮೋಡದಂತೆ ನೀಲವರ್ಣನು, ವಿಶಾಲವಾದ ಕಂಗಳುಳ್ಳವನು,

१. 'च शुभाननम्' ख.

ಉದ್ದನೆಯ (ಎದ್ದುಕಾಣುವ) ಮೂಗು ಸುಂದರ ದಂತಪಂಕ್ತಿ, ತುಟಿ, ಆಕರ್ಷಿಸುವ ಮುಖ ದಿಂದ ಪರಿಶೋಭಿಸುವ ಶ್ರೀಹರಿಯನ್ನು ಯಾವಾಗ ಕಾಣುವೆನು?

21. ವಿಶಾಲವಾದ ಎದೆ ಶಂಖದಂತೆ ಹೊಳೆಯುವ ಕುತ್ತಿಗೆ ಉದ್ದವೂ ದಷ್ಟಪುಷ್ಟಗಳೂ ಆದ ಬಾಹುಗಳಿಂದ ಶೋಭಿಸುವ ವಿಶ್ವಕ್ಕೆ ಜ್ಞಾನಪ್ರದನೂ ದುಷ್ಟಸಂಹಾರಿಯೂ ಆದ ಸಿರಿಯರಸನನ್ನು ಯಾವಾಗ ನೋಡುವೆನು ?

22. ತೆಳುವಾದ ಹೊಟ್ಟೆ, ಆಳವಾದಹೊಕ್ಕಳು, ಸುತ್ತಲೂ ಪುಷ್ಟವಾದ ನಡು, ಆನೆಯ ಸೊಂಡಿಲಂತೆ ಕ್ರಮವಾಗಿ ದಪ್ಪನೆಯಾದ ತೊಡೆಗಳಿಂದ ಶೋಭಿಸುವ ಸಿರಿಯರಸ ಏ ಹರಿಯನ್ನು ಯಾವಾಗ ನೋಡುವೆನು?

23. ಶಂಖ-ಚಕ್ರ-ಗದಾ-ಪದ್ಮಗಳಿಂದ ವಿಭೂಷಿತವಾದ ಪಾದಕಮಲಗಳು ಮತ್ತು ಕೂರುಗುರುಗಳ ಕಾಂತಿಯಿಂದ ಶರತ್ಕಾಲದ ಪೂರ್ಣಚಂದಿರನ ಕಾಂತಿಯನ್ನು ಧಿಕ್ಕರಿಸಿದ (ಮೀರಿಸಿದ) ಶ್ರೀಹರಿಯನ್ನು ಯಾವಾಗ ಕಾಣುವೆ ?

20. The Lord is beautifully bluish dark in colour, having large and attractive eyes with sharp nose well-pronounced, pearl-like teeth, coral lips. I am eagerly waiting to see the Lord.

21 With broad chest, the neck resembling counch, sturdy long arms, robust shoulders. Oh, when can see the Lord, the bestower of perfect knowledge and the destroyer of the wicked and the cruel.

22. Attractive, slim. flat stomach, deep navel, robust waist, round thighs resembling the trunk of an elephant,how soon can I see the Lord of Lakshmi ?

23. How soon can I have a glimpse of Lord Sri Hari, holding his glorious Shanka,Chakra,Gada and Padma. His sparkling sharp nails excels the brightness of tens of thousands of full moons.

**सुरासुरैर्वन्द्यमानमृषिभिर्वन्दितं सदा ।**
**मूर्धानं मामकं देव तावकं मण्डयिष्यति ।। २४ ।।**

**सुरासुरैः** इति ।। 'हरेरनुव्रता यत्र सुरासुरार्चिताः' (अनु. व्या. ४.२.१८६२ उक्त भागवतवचनम्) इत्यनुव्याख्यानव्याख्यानावसरे 'असुरा अपि साधवः सन्ति' इति सुधोक्तेरसुरैर्वन्द्यमानत्वं युक्तम् । अत एव च 'येषां च विरोधः

शाश्वतिकः' इत्येकवद्भावाभावः । माघव्याख्याने तु 'मनुष्यजन्मापि सुरासुरान् गुणैः' इत्यत्र सुरासुरविरोधकार्योपाधिकत्वेनाशाश्वतिकत्वात् 'येषां च विरोधः शाश्वतिकः' इति न द्वन्द्वैकवद्भाव इत्याहुरित्युक्तम् । [१]पेद्दभट्टेन ।

यद्वा असुभिः स्वरूपेन्द्रियैश्चिन्मात्रैः रमन्ते स्वरूपानन्दमनुभवन्तीत्यसुराः ते च ते सुराश्च सुरासुराः कडारादित्वात् विशेषणस्य परनिपातः । तैर्वन्द्यमानम् इत्यर्थः। व्याख्यातं चैवम् 'अमरासुरसिद्धवन्द्यम्' (महा. १.१.१) इति भारताद्यपद्यम् 'असुरूपसुरैश्च वन्द्यम्' इति श्रीमन्महाभारततात्पर्यनिर्णये भगवता भाष्यकृता । तत्रासुरशब्दवाच्यानाम् इन्द्रियाणां चिन्मात्रत्वं वक्तुमसुरूपेत्युक्तिर्ज्ञेया । उदाहृतभागवतश्लोकटीकायां तु 'असनादसुस्तु हरिः तस्मिन् रमन्त इत्यसुराः । असुरत्वगुणोपेतैः सुरैरर्चिताः । 'महद्देवानाम-सुरत्वमेकम्' इति श्रुतेरिति विवृतम् । देवानां यदसुरत्वं तन्महत् श्रेष्ठं विष्णुनिष्ठत्वरूपार्थाधिक्यात् । तथा एकं दैत्यनिष्ठासुरत्वजात्यपेक्षया भिन्नम् इति श्रुत्यर्थो ज्ञेयः । तावकं पादपङ्कजं मामकं मूर्धानं मण्डयिष्यति इति योजना ।। २४ ।।

24. ದೇವತೆಗಳು ಹಾಗೂ ಸಾತ್ವಿಕರಾದ ಅಸುರರಿಂದ ಆರಾಧ್ಯವಾದ ನಿನ್ನ ಪಾದ ಕಮಲವು ನನ್ನ ಶಿರಸ್ಸನ್ನು ಅಲಂಕರಿಸಲಿ. (ತಲೆಯ ಮೇಲೆ ನಿನ್ನ ಪಾವನ ಪಾದಗಳಿರಿಸು)

24. Let the feet of the Lord be placed my head. Those feet have been worshipped with total devotion by the deities and Satwika souls of very high order.

**कदा गम्भीरया वाचा श्रिया युक्तो जगत्पतिः ।**
**चामरव्यग्रहस्तं मामेवं कुर्विति वक्ष्यति ।। २५ ।।**

चामरेण व्यग्रहस्तं चञ्चलहस्तम् ।। २५ ।।

25. ವಿಶ್ವದೊಡೆಯನೂ ಸಿರಿಯರಸನೂ ಆದ ನಾರಾಯಣನು ಅವನಿಗೆ ಚಾಮರ

१. पद्यभेदेन. मुद्रितपुस्तके

ಗಳನ್ನು ಬೀಸುತ್ತಿರುವ ನನಗೆ ಗಂಭೀರವಾದ ತನ್ನ ವಾಣಿಯಿಂದ ಯಾವಾಗ 'ಇದನ್ನು ಮಾಡು' ಎಂದು ಆದೇಶಿಸುವನೋ ?

25. When does that Lord of Lakshmi who always fans Sri Hari with Chamara, instructs me saying 'Do this'.

**कदाहं राजराजेन गणनाथेन [१]चोदितः ।**
**चरेयं भगवत्पादपरिचर्यासुवर्तनम्[२] ॥ २६ ॥**

राजराजेन कुबेरेण गणनाथेन गजाननेन च आज्ञाधारिणा उदितः कदाचरेयम् इति प्रार्थने लिङ् । 'राजराजो धनाधिपः' इत्यमरः । यद्वा राज्ञां राजा राजराजः 'राजाहः सखिभ्यष्टच्' (पा.सू. ५.४.९१) इति टच् । गणनाथेन इन्द्रियगण-पतिना श्रीहरिणा 'निषुसीद गणपते गणेषु' (ऋ.१०.११२.९) इति श्रुतेः साक्षात् चोदितः प्रेरित इति तृतीयान्तयोः सामानाधिकरण्येन योजना ॥२६॥

26. ಗಣಪತಿಯ ಹಾಗೂ ಕುಬೇರ ಮೊದಲಾದ ಇಂದ್ರಿಯಾಭಿಮಾನಿ ದೇವತೆಗಳ ಪ್ರೇರಕನಾದ ಶ್ರೀಹರಿಯ ಪ್ರೇರಣೆಯಂತೆ ನಿನ್ನ ಪಾದಸೇವೆಯನ್ನು ನಾನು ಯಾವಾಗ ನೆರವೇರಿಸುವೆನೋ ?

26. when and how soon can I get chance of serving his feet. He motivates Ganapathi and Kubera who are the controlling deities of sensory organs. I eagerly wait to serve the Lord.

**शान्ताय सुविशुद्धाय तेजसे परमात्मने ।**
**नमः सर्वगुणातीतषड्गुणायादिवेधसे ॥ २७ ॥**

[३](भगवते ऐश्वर्यादिमते विष्णोः सर्वव्यापित्वात् विष्णुः विष्लृव्याप्तौ इति धातोः विषेः किञ्च इति सूत्रेण स्थोणुः इति पूर्वसूत्रानुवृत्ते णु प्रत्यये ।)

१. नोदितः ख.

२. 'पररिचर्यानुवृत्तिषु' ख.

३. इत्यनन्वितानि वचनानि मुद्रितपुस्तके दृश्यन्ते

[१]शान्ताय शस्य मौक्तसुखस्य स्वज्ञानात् प्राक् अन्तो बन्धो यस्मादिति वा । शर्वः 'शंरोधनात् हरिः' (अनु.व्या.१.३.३) इति वचनात् । शस्य दैत्यसुखस्य अन्तो नाशो यस्मात् इति वा '। सुखावधिः इति वा शान्तः तस्मै । तेजसे प्रकाशरूपाय । तस्य विशेषणं सुविशुद्धाय इति । शुद्धत्वं च सान्तत्वं सातिशयत्वराहित्यम् । चिन्तासन्तापमाद्यसंभिन्नत्वज्ञापनाय 'सु', 'वि' इत्युपसर्गद्वयम् ।

यद्वा सूतेः जगदु(त्पा)दनात् सुः सूतेर्डुः । व्याप्तत्वाद् विः । ...रिति श्रुतेः । पावनत्वात् शुद्धः । 'पावनत्वात् सदा शुद्धम्' इति शावास्यभाष्योक्तेः । सुश्चासौ विश्चासौ शुद्धश्च तथोक्तस्तस्मै हे 'सर्व पूर्ण सर्वं पूर्णम् इहोच्यते' इत्यादेः स्वाधीनसर्वप्रपञ्चो वा तदाह सूत्रे 'तदधीनत्वात्तदर्थवत्' (ब्र.सू. १.४.३) इति । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इत्यादेर्नाभेदो ज्ञेयः । **गुणातीत** नित्यं सत्त्वादिगुणत्रयविधुर 'केवलो निर्गुणश्च' ( श्वेता. उ. ६.११) इति श्रुतेः । आदिः जगत्कारणं सचासौ वेधा धारणपोषणकर्ता च तथोक्त-स्तस्मै । 'विशेषेण धारणपोषणकर्ता हि वेधाः' इति ऐतरेयभाष्योक्तेः । 'धाताविधाता परमो न सन्दृक्' (गी.भा. ८.९) इति श्रुतेः । आदौ वेधाश्चतुर्मुखो यस्मात् इति वा तस्मै । 'ब्रह्मा विष्णोः सुतोऽग्रजः' (आथर्व. उ. ) इति अथर्वणभाष्योक्तेः ।। २७ ।।

27. ದುರ್ಜನರಿಗೆ ಸುಖ ನೀಡದ, ಪರಿಶುದ್ಧನೂ ತೇಜೋಮಯನೂ ಪ್ರಾಕೃತ ಗುಣವಿದೂರನೂ ಅನಂತಾಪ್ರಾಕೃತಗುಣನೂ ನಾಲ್ಮೊಗನ ಜನಕನೂ ಆದ ಪರಮಾತ್ಮನಿಗೆ ನಮನಗಳು.

27. To the Lord I prostrate in all devotion and humility. The Lord does not give any happiness to the vice and wicked. The Lord is perfectly pure, far from any blemish, ever brightest, far

१. 'शान्ताय शमोक्त.....स्वज्ञानात् प्राक् अन्तो वधो यस्मादिति वा ।' इति मुद्रितपुस्तके दृश्यते ।

from the worldly nature. He is the embodiment of infinite unique unworldly nature and he is the father of Brahma.

**सत्यज्ञानानन्तगुणब्रह्मणे चतुरात्मने ।**
**नमो भगवते विष्णो वासुदेवामितद्युते ॥ २८ ॥**

**सत्यं** नित्यं **ज्ञानं** यस्य तत्सम्बुद्धिः । यद्यपि [1]षड्गुणाय इत्यनेन ज्ञानमप्युदितम् । तथापि ज्ञानोपलक्षितानां सर्वेषां नित्यत्वबोधनाय पुनः सत्यज्ञानेति सम्बोधनम् ।'सदातनं सत्यम् इति नित्यमेवोच्यते बुधैः' इत्यनुव्याख्यानोक्तेः सदाशब्दादव्ययात्त्यबिति त्यप्रत्यये 'सर्वस्य सोऽन्यतरस्यां दि' इत्यत्र (५.३.६)योगविभागात् सदाशब्दस्य सभावः । सदाशब्दाद्भवार्थे 'तद्धिताः' (पा. ४.१.७६) इति द्य प्रत्यये वा दकारस्य तकारः । सत्यं यथार्थं ज्ञानं यस्य इति वा । षड्गुणाय इत्युक्त्या प्राप्तान्तवन्त एव गुणा इति भ्रान्तिं निराह - **अनन्त** इति ॥ अनन्तैर्गुणैः पूर्णाय नम इत्यर्थः । **भगवते** ऐश्वर्यादिमते । विष्णोः सर्वव्यापित्वात् विष्णुः । 'विष्लृ व्याप्तौ' इति धातोः 'विषेः किश्च' इति सूत्रेण स्थाणुरिति पूर्वसूत्रात् अनुवृत्ते णु प्रत्यये तस्य कित्वाद्गुणाभावः । यद्वा गत्यर्थाद् 'वी'धातोः करणे क्स्नु [2]प्रत्यये पृषोदरादित्वेन (पा. ६.३.१०९) धातो ह्रस्वत्वे कित्वाद्गुणाभावे आदेशप्रत्यययोः (पा. ८.३.५९) इति सस्य षत्वे 'रषाभ्यां' (पा. ८-४-१) इति णत्वे च रूपम् । सर्वप्रवेशित्वात् विष्णो । 'विश प्रवेशने' इत्यत उणादयो बहुलम् (पा.सू.३.३.१) इति क्नु प्रत्यये पृषोदरादित्वेन (पा.सू.६.३.१०९)शस्य षत्वे नस्य णत्वे च रूपं कान्त्यर्थाद्विधातोः श्रुः । शिष्टं प्राग्वत् । अधिककान्तिमत्वाद्वा विष्णुः । इच्छार्थात् वशधातोर्बाहुलके नु प्रत्यये निर्वचनत्वादुपधाकारस्येकारे शस्य षत्वे च रूपम् । त्रिविक्रमरूपेण पादविक्षेपात् वा विष्णुः । गत्यर्थाद् वयतेः कर्तरि क्स्नुः । शिष्टं प्राग्वत् तत्सम्बुद्धिः । तदुक्तम् । 'गतिश्च सर्वभूतानां प्रजानां चापि भारत । व्याप्ते मे रोदसी पार्थ कान्तिश्चाभ्यधिका

१. षड्गुणस्य. मुद्रितपुस्तके
२. श्रुप्रत्यये. मुद्रितपुस्तके

मम । अधिभूतनिविष्टश्च तदिच्छुश्चापि भारत । क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसञ्ज्ञितः' इति ।

वासुदेव वासनाद्वा । गत्यर्थाद्वातेर्विच् सूतेर्डुः । क्रीडादिकर्तृत्वात् स्तुत्यादिकर्मत्वाद्वा देवः क्रीडाद्यर्थद्दीव्यतेरिगुपधलक्षणस्य कस्य बाधकः पचाद्यच् स्तुत्यर्थाद्गत्यर्थाच्च । कर्मणि घञ् । तदुक्तं ह्न 'द्योतनाद्विजयात् कान्त्या स्तुत्या व्यवहृतेरपि । गत्या रत्या च देवाख्यम्' (१.१.१६.) इति ऋग्भाष्ये । वाश्चासौ सुश्चासौ देवश्च वासुदेवः । अथवा बलरूपत्वाद् वः । असुरूपत्वात् प्राणरूपत्वात् असुः । दातृत्वात् दे । ददतेरेकारः कृन्मेजन्त (पा.१.१.३९) इत्यव्ययत्वम् । सर्वत्र वर्तनाद् वः 'वृतु वर्तन' इत्यतो डः । वश्चासावसुश्चासौ देचासौ वश्च वासुदेव इति कर्मनिर्णयटीकोक्तदिशार्थो ज्ञेयः । तत्सम्बुद्धिः । तथा च नारायणश्रुतिः 'वासनात् सूतेः देवनाद् वासुदेवो वासाद् द्युतेश्छादनात् क्रीडया वा । बलादसुत्वावृतो वर्तनात् च तं वासुदेवं प्रवदन्ति वेदाः इति । एवं निरुक्त्यन्तराणि द्रष्टव्यानि ग्रन्थगौरवभयादेवोपरम्यते ।। २८ ।।

28. ಸತ್ಯವಾದ ಜ್ಞಾನಾದಿ ಅನಂತಗುಣಪೂರ್ಣನಾದ ವಾಸುದೇವ-ಸಂಕರ್ಷಣ-ಪ್ರದ್ಯುಮ್ನ-ಅನಿರುದ್ಧ ಎಂಬ ನಾಲ್ಕು ವ್ಯೂಹರೂಪಧರಿಸಿದ ಅಮಿತ ವಿಕ್ರಮನಾದ, ವ್ಯಾಪ್ತನಾದ ಓ ವಿಷ್ಣುವೇ ನಿನಗೆ ನಮನಗಳು.

28. Oh, all pervading Krishna the embodiment of real knowledge and infinite virtues, showing his four forms - Sankarshana, Pradyumna, Anirudha and Vasudeva, is an ever winner. To him I prostrate with all humility and devotion again and again.

**चतुः पञ्चनवव्यूहदशद्वादशमूर्तये ।**
**नमोऽनन्ताय विश्वाय विश्वातीताय चक्रिणे ।। २९ ।।**

चत्वारश्च पञ्च च नव च तैः स्वमूर्तिभिर्व्यूहो यस्य स तथोक्तस्तत्सम्बुद्धिः । अनिरुद्धादयश्चत्वारः । कृद्धोल्कादयः पञ्च । 'नारायणः परं ब्रह्म वासुदेवादि-कास्तथा । नरसिंहवराहौ च परञ्ज्योतिर्नव' इत्येकादशभागवततात्पर्योक्त्या

नारायणादयो नव । 'विमलोत्कर्षणी ज्ञाना क्रिया योगा तथैव च । प्रह्वी सत्या तथेशानाऽनुग्रहा चेति शक्तयः (तन्त्र.सं. १.५६,५७) इति तन्त्रसारोक्त-विमलादयो वा नव इति ज्ञेयम् । दश द्वादश च मूर्तयो यस्य स तथोक्तस्तस्मै दश मत्स्यादयः द्वादश केशवादिदामोदरान्ता मूर्तय इति ज्ञेयम् । चत्वारो वा पञ्च वा नव वा चतुष्पञ्चनवाः । बहुव्रीहौ सङ्ख्येये डजबहुगणात् (पा.सू. ५.४.७३) इति डच् । एवम् अग्रेऽपि । ते व्यूहा यस्य तथोक्ता दश द्वादशमूर्तयो यस्य स तथोक्तानि वा । अनन्ताय नित्याय अपरिच्छिन्नाय वा । विश्वाय जगति प्रविष्टाय 'विश प्रवेशने' इत्यत औणादिकः क्वन् । 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै.उ. २.६) इति श्रुतेः । विश्वातीताय जगद्विलक्षणाय । विप्रसुतानानेतुं समस्तलोकान् अतीताय वा । 'द्वितीया श्रितातीत' (पा.सू. २.१.२४) इति द्वितीयासमासः । 'आशामुदीचीं बृहता रथेन क्षणेन नीत्वैव च सप्तवार्धीन् । ददुश्च मार्गं गिरयोऽब्धयस्तथा विदार्य चक्रेण तमोऽन्धमाशाः । घनोदकं चाप्यतितीर्य तत्र ददर्श रामः स्वमनन्तवीर्यः' इति श्रीमन्महाभारततात्पर्य-निर्णयोक्तेः । विश्वायविश्वातीतायेत्येकं पदं वा । 'विश्वो वायुः समुद्दिष्टः पूर्णत्वात् जीवसङ्घतः' इति बृहद्भाष्योक्तेः । विश्वो वायुः तस्यायो लाभो ब्रह्मपदं यस्मात्स विश्वायः स चासौ विश्वातीतेति तथोक्तः । चक्रिणे रथाङ्गिने ससैन्याय वा ।। २९ ।।

29. ವಾಸುದೇವಾದಿ ಚತೂರೂಪನು (ನಾಲ್ಕು ವ್ಯೂಹರೂಪಧಾರಿಯು) ಕೃದ್ಧೋಲ್ಕ-ಮಹೋಲ್ಕ-ದ್ಯೂಲ್ಕ-ವೀರೋಲ್ಕ-ಸಹಸ್ರೋಲ್ಕ ಎಂಬ ಐದು ರೂಪಗಳನ್ನು ಧರಿಸಿದವನು, ವಿಮಲಾ-ಉತ್ಕರ್ಷಿಣೀ -ಜ್ಞಾನಾ -ಕ್ರಿಯಾ- ಯೋಗಾ -ಪ್ರಹ್ವೀ -ಸತ್ಯಾ- ಈಶಾನಾ-ಅನುಗ್ರಹಾ ಎಂಬ ಒಂಬತ್ತು ಬಗೆಯ ರೂಪಗಳುಳ್ಳ, ಕೇಶವನಿಂದ ಆರಂಭಿಸಿ ದಾಮೋದರ ನವರೆಗೆ ಚಿಂತಿಸಬೇಕಾದ ಕೇಶವಾದಿ ದ್ವಾದಶ ರೂಪಗಳುಳ್ಳ, ವಿಶ್ವದೊಳಗೆ ವ್ಯಾಪ್ತನಾಗಿದ್ದರೂ ಇದರಿಂದ ಭಿನ್ನನಾದ, ಪರಿಪೂರ್ಣನೂ ಚಕ್ರಧಾರಿಯೂ ಆದ ಅನಂತನಿಗೆ ನಮನಗಳು.

29. Apart from showing his four forms, such as Vasudeva and others, he also shows his five forms, all at his Will,-Kruddholka, Maholka, Dyulka, Veerolka and Sahasrolka group. Again Lord,

you show the nine forms group of Vimala, Utkarshinee, Jnaana, Kriya, Yoga, Prahvee, Satya, Eeshaanaa and Anugrahaa.

For us to meditate, he shows twelve forms from Keshava to Damodara. Oh Lord ! though you pervade the universe fully yet you show different forms to different souls on different occasions. To you, the perfect one, I prostrate, prostrate and prostrate again and again.

**नमस्ते पञ्चकालज्ञ पञ्चकालपरायण ।**
**पञ्चकालैकमनसां त्वमेव गतिरव्ययः ॥ ३० ॥**

**नम** इति । हे **पञ्चकालज्ञ** प्रातःसङ्गवादिपञ्चकालज्ञ । पञ्चेति भिन्नं पदं वा । वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनारायणभेदेन पञ्चरूप । हे कालज्ञ हे कालज्ञानिन् । 'कालज्ञौ ज्ञानिकुक्कुटौ' इत्यभिधानात् । अपञ्चेति च्छेदो वा । पञ्चानां महापातकानां वर्गः पञ्चः जातीयरोर्थे पञ्चन् शब्दात् डप्रत्ययः । 'प्रपञ्चो यदि विद्येत' (माण्डू.उ.) इत्यत्र पञ्चदशतौ वर्गौ वा इति । वाशब्देन पञ्चशब्दस्य निपातनात् इति सुधोक्तेः । नान्तो वा अयं शब्दः । न विद्यते पञ्च यस्य स तथोक्तः । 'स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशितापि' इति श्रुतेः । जानातेर्घञर्थे कविधानम् इति वा । इगुपधज्ञाप्रीकिरः कः (पा. ३.१.१३५) इति वा कप्रत्यये ज्ञः ज्ञानम् । काले उचितकाले **ज्ञः** ज्ञानं यस्मात् स तथोक्तः तत्सम्बुद्धिः । 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत' (गी.४.७) इत्यादेः । पञ्चकाला हेमन्तशिशिरयोरैक्येन पञ्च ऋतवः । परायणमाश्रय उपासनाधिष्ठानं यस्य स तथोक्तः [1]तत्सम्बुद्धिः । 'ऋतुषु पञ्चविधसामोपासीत' इति श्रुतेः । पञ्चस्वपि कालेषु प्रातरादिषु च वसन्तादिषु वा एकं एकप्रकारं मन येषां ते तथोक्ताः भक्ताः तेषाम् । यद्वा कला भगवदवताराः । 'एते स्वांशकलाः' (भागवत. १.३.२८) इत्यत्र तथा व्याख्यानात् तेषां समूहः कालं तस्य समूह इत्यण् । तस्मिन् एकमभिन्नम् इति मनो येषां ते तथोक्ता भक्ताः ।

१. 'तत्सम्बुद्धिः' इत्यारभ्य 'तेषाम्' इत्यन्तो भागः मुद्रिते न दृश्यते ।

'नेह नाना' (कठो.उ. ४.११, बृ.उ. ४.४.१९) इत्यादि श्रुतेः । देव-ऋषि-पितृ-चक्रवर्ति-मनुष्यभेदेन पञ्च च ते कालैकमनसश्च तेषामित्यर्थः । गम्यत इति गतिः । 'अथ कस्मादुच्यते गतिः' इति 'ब्रह्मैव गतिस्तद्धि गम्यते पापविमुक्तेः' इति श्रुतेः ।। ३० ।।

30. ವಾಸುದೇವಾದಿ ಪಂಚರೂಪನೇ ಕಾಲನಿಯಾಮಕನಾಗಿದ್ದು 'ಕಾಲಜ್ಞ' ಎನಿಸಿದವನೇ, ವಸಂತ-ಗ್ರೀಷ್ಮ-ವರ್ಷಾ-ಶರದ್-ಹೇಮಂತ ಎಂಬ ಐದು ಋತುಗಳಲ್ಲಿ ಉಪಾಸ್ಯನೇ, 'ಕಾಲ' ನಾಮಕನಾದ ನಿನ್ನ ಉಪಾಸನೆಗೈವ ದೇವ-ಋಷಿ-ಪಿತೃ -ಚಕ್ರವರ್ತಿ-ಮನುಷ್ಯೋತ್ತಮರಿಗೆ ಯೋಗ್ಯಗತಿ ಕರುಣಿಸುವ ನಿನಗೆ ನಮನಗಳು.

30. Having five forms such as vasudeva and others, and being the controller of time, you are called Kaalajna. You are the only one worthy of being worshipped.

During all the five seasons such as Vasntha, Ghreeshma, Vaishakha, Sharad, and Hemantha, you are worshipped taking the name of Kaalajna by all the deities, Rishis, Pitrus, Chakravarthis and the most deserving human souls. To these you bestow your benevolence, depending on what they deserve.

**स्वमहिम्नि स्थितं देवं निरनिष्टं निरञ्जनम् ।**
**अप्रमेयमजं विष्णुं शरणं त्वां गतोऽस्म्यहम् ।। ३१ ।।**

**स्वमहिम्नि** इति ।। 'स्वे महिम्नि' (मैत्रा. ६.२८) इति श्रुतेः । निरनिष्टं ज्वरादिबाह्यानिष्टरहितं निरञ्जनं स्वाभाविकदोषरहितम् । 'निरनिष्टो निरवद्यः' इति श्रुतेः । निरञ्जनं पुण्यपापलेपरहितं वा । 'अथ यः सदोषः साञ्जन' इत्यत्र 'साञ्जनः पुण्यपापलेपयुक्तः' इति व्याख्यानात् । अप्रमेयं रमादिभिरपि साकल्येनाज्ञेयम् । शरणं गतोऽस्मि । शरणागतिश्च- 'सर्वोत्तमत्वविज्ञानपूर्वकं तत्र मनस्सदा सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम् । अखण्डा त्रिविधा पूजा तद्वत्यैव स्वभावतः । रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः । शरणागतिरेषा स्याद्विष्णोर्मोक्षफलप्रदा' (गी.ता. १८.६६) इति गीतातात्पर्योक्ता ज्ञेया ।। ३३ ।।

31. ಪರಾವಲಂಬನೆ ಇಲ್ಲದ, ರೋಗ ಹಾಗೂ ಪುಣ್ಯಪಾಪಗಳಿಲ್ಲದ, ಬುದ್ಧಿಗೆ ಪೂರ್ಣವಾಗಿ ನಿಲುಕದ, ಜನನ ಮತ್ತು ಮರಣ (ವಿನಾಶ)ರಹಿತನಾದ ವಿಷ್ಣುವಿಗೆ ಶರಣಾಗತನಾಗಿರುವೆ.

31. I bow down prostrating to Vishnu, Who does not depend on anyone but on whom everyone and everything depends. He is untouched by any blemish such as sin or illness and who is beyond the complete comprehension of anybody. He is beyond the cycle of birth and death. To him I bow in total devotion in all humility again and again.

**वागतीतं परं शान्तं (अब्ज) कञ्जनाभं सुरेश्वरम् ।**
**तुरीयाद्यतिरिक्तं त्वां कौस्तुभोद्भासिवक्षसम् ॥ ३२ ॥**

**वाक्** इति । वाक् इत्युपलक्षणं साकल्येन मनोवाचामगोचरम् । 'यतो वाचो निवर्तन्ते' (तै.उ. २.४.५) । 'अशब्दम्' (कठो. ३.१५) । 'वि मे मनश्चरति' (ऋ. ६.९.६) इत्यादि श्रुतेः । 'अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः । अद्भुतत्वादवाच्यं तदतर्क्यज्ञिज्ञयमेव च' (ब्र.सू. १.१.५) इत्यादिस्मृतेश्च । परं पूर्णं स्वतन्त्रं वा सर्वोत्तमं वा जडजीवप्रकृतिभ्योऽत्यन्तविलक्षणं वा । शान्तं नित्यमुक्तम् । 'शान्तिर्मोक्षोऽथ निर्वाणम्' इत्यभिधानान्मोक्षवाचकाच्छान्तिशब्दादर्श आद्यच् । कञ्जं नाभौ यस्य स तथोक्तम् । 'अच् प्रत्यन्ववपूर्वात्सामलोम्नः' (पा.५-४-७५) इत्यङ् च अजिति योगविभागान्नाभेरच् । शरणं गतोऽस्मि इति पूर्वेण वा कदा द्रक्ष्यामीत्युत्तरेण वान्वयः । तुरीयश्चासावादिर्मुक्तज्ञानकारणं च तुरीयादिः । 'सर्वज्ञानप्रदश्चापि [1]मुक्तस्यापि तुरीयकः' (माण्डूक्य. भा. १.२. उदाहृतब्रह्माण्डवचनम्) इति माण्डूकभाष्योक्तेः । सचासावतिरिक्तो जीवाद्भिन्नश्च तुरीयाद्यतिरिक्तः तम् । 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम् इति वीतशोकः' (श्वेता.उ. ४.७) इत्यत्र 'सर्वसेव्यमीशं जीवादन्यम्' इति तत्त्वप्रकाशिकायामानन्दमयनये

१. 'मुक्तस्यैव' इति प्रसिद्धपाठः ।

व्याख्यानात् । यद्वा तुरीय आदिर्येषां ते तुरीयादयः तैः अतिरिक्तम् । तुरीयादिभेदभिन्नबहुरूपम् इति यावत् । तुरीयस्य मुक्तप्राप्यरूपतया मुखतो ग्रहणम् । 'विष्णुस्तुरीयरूपेण द्वादशान्ते व्यवस्थितः। मुक्तानां प्राप्यरूपोऽसौ' इति माण्डूकभाष्योक्तेः । 'भेदशब्दाद् विशेषं तु हरावन्यत्र भिन्नताम् इत्यनुव्याख्यानोक्तेर्न 'नेह नाना' इत्यादिश्रुतिविरोधः । अथवा तुरीयश्चतुर्थो विज्ञानमयाख्यो वासुदेव इति यावत् । स आदिर्येषां क्रमात् मनोमय-प्राणमयान्नमयाख्यानां सङ्कर्षणप्रद्युम्नानिरुद्धानां ते तुरीयादयः तेभ्योऽतिरिक्तं तेभ्यो बहिर्विद्यमानम् इति यावत् । तदुक्तमह्न 'देहदेहिवदेवासौ पञ्चधाऽ-वस्थितो हरिः । बहिष्ठो देहवद्विष्णुरन्तस्थो देहिवत् स्मृतः । अन्तर्व्याप्ति-विशेषेण नत्वशक्तित्वतो बहिः । 'सर्वेऽपि पुरुषाकारा उत्तरात्पूर्वसम्भवाः । उत्तरैः पूरिताः सर्वे निच्छिद्रत्वेन सर्वशः' इत्यादि तैत्तिरीयभाष्ये । चतुःशब्दात् 'चतुरश्छयतावाद्यक्षरलोपश्चे (वार्तिकम्- पा.सू. ५.२.५१) इति छप्रत्यये चलोपे छस्येयादेशे च तुरीयं रूपम् ।। ३२ ।।

32. ಮನಸ್ಸು ಹಾಗೂ ಶಬ್ದಗಳಿಗೆ ನಿಲುಕದ, (ವರ್ಣಿಸಲಾಗದ) ಸ್ವತಂತ್ರ ಹಾಗೂ ನಿತ್ಯ ಮುಕ್ತನಾದ, ಕಮಲದಂತೆ ಕಂಗಳುಳ್ಳ, ದೇವೋತ್ತಮನೂ, ಮುಕ್ತರಿಗೆ ಜ್ಞಾನಪ್ರದನೂ, ಎದೆಯಲ್ಲಿ ಕೌಸ್ತುಭಮಣಿ ಧರಿಸಿದವನೂ ಆದ ನಿನಗೆ ನಮನಗಳು.

32. Oh Lord ! Words can not describe you totally. You are fully independent and ever liberated . You are wonderful having beautiful, attractive eyes like lotus . You are far superior to all deities. You grant knowledge even to the liberated souls. You have Kousthubha an your Chest. You adore Kousthubha. How soon can I see you, my Lord. I am very eager. I prostrate to you in all devotion and humility again and again.

**विश्वरूपं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ।**
**मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन (धराधर) ।। ३३ ।।**

**विश्वरूपं** पूर्णरूपं 'स विश्वरूपोऽनूनरूपः' इति श्रुतेः । यद्वा विशिष्टःश्वा विश्वा । श्वेतश्वानरूपो वायुः । 'श्वा वै वायुः श्वासनात्' इति ऋग्भाष्योक्तेः ।

'तस्मै श्वा श्वेतः प्रादुर्बभूव' इति श्रुतेश्च । 'प्रसादार्थं बकस्यापि वायुना च स्वरूपिणा' इति छान्दोग्यभाष्योदाहृतस्मृतेश्च । तस्मिन् रूपं यस्य स तथोक्तम् । 'वायुस्थविष्णुमुद्दिश्य हिंकृत्य प्रापुरीप्सितम्' इति छान्दोग्यभाष्योदाहृतस्मृतेश्च । कदा द्रक्ष्यामि 'तस्यैष आत्मा विशते ब्रह्मधाम' (मुण्डक ३.२.४) इति श्रुतेः । **मोक्षम्** इति **सालोक्यसारूप्यम्** इति द्वन्द्वैकवद्भावः । सालोक्यसहितं सारूप्यम् इति वा । मुखनासिकावचनोऽनुनासिकः (पा.सू. १.१.८) इत्यत्र मुखसहितनासिकयोच्चार्यमाण इति वैयाकरणैः विवरणम् । उपलक्षणं एतत् । 'सालोक्यं च सरूपत्वं सामीप्यं योग एव च' इति सूत्रभाष्योदाहृत-प्रमाणोक्तसामीप्ययोगौ च ग्राह्यौ । योगः सायुज्यम् ।।३३ ।।

33. ಪರಿಪೂರ್ಣನೂ ವಿಶಾಲಾಕ್ಷನೂ (ಅರಳಿದ ಕಂಗಳುಳ್ಳವನು) ಆದ ನಿನ್ನನ್ನು ಯಾವಾಗ ನೋಡುವೆನು ? ಸಾಲೋಕ್ಯ ಅಥವಾ ಸಾರೂಪ್ಯವೆಂಬ ಮುಕ್ತಿಯನ್ನು ನಾನು ನಿನ್ನಲ್ಲಿ ಬೇಡುವುದಿಲ್ಲ.

33. You are perfect from all angles. Your eyes are wide and beautiful I do not beg from you for Saayujya or Saarupya kind of liberation. All I am eager about is just to have a glimpse of you. What else I need ?

**इच्छाम्यहं महाभाग कारुण्यं तव सुव्रत ।**
**सकलावरणातीत किङ्करोऽस्मि तवानघ ।। ३४ ।।**

हे **सुव्रत** । प्रपन्नग्रहणव्रत । 'इमं स्थिरमागृहीष्ये पादप्रपन्नमिदम् एव सदा व्रतं मम' (म.ता.नि. ८.६) इति श्रीमन्महाभारततात्पर्यनिर्णये विभीषण-परिग्रहणप्रस्तावे श्रीरामोक्तेः । हे सकल प्राणादिभिः कलादेवैः सहिताः प्राणादयः कला यस्मिन् मुक्ता नित्यं प्रतिष्ठिताः । 'पृथक्पृथङ्नामरूपैः नमस्तस्मै पराय ते' (षट्प्रश्न.उ. ६.९) इति षट्प्रश्नभाष्योक्तेः । **आवरणातीत** । नित्याज्ञानातीत । 'उत्पत्तिस्थितिसंहारानियतिर्ज्ञानमावृतिः' इत्यत्र 'आवृतिरज्ञानम्' इति व्याख्यानात् । **सकलावरणातीत** इत्येकं पदं वा । सकलानि 'अबग्नीरनभोहङ्कृन्महत्तत्त्वगुणत्रयैः । क्रमाद्दशोत्तरैरेतदावृतं

परतस्ततः' (म.ता.नि. २१.४५) इति श्रीमन्महाभारततात्पर्यनिर्णये उक्तानि समस्तानि आवरणानि ब्रह्माण्डावरणानि । अतीत अतिक्रान्त 'द्वितीया श्रितातीत' (२.१.२४) इति समासः । सकलानि आवरणानि अतीतानि अतिक्रान्तानि यस्मात् स तथोक्तो वा तत् सम्बुद्धिः ।। ३४ ।।

अनुयागो होमविशेषस्तन्त्रसारोक्तः ।। ३४ ।।

34. ನಾನು ಬಯಸುವುದು ಕೇವಲ ನಿನ್ನ ಅನುಗ್ರಹ ಮಾತ್ರ. ಬ್ರಹ್ಮಾಂಡದ ಹೊರ ಗಿರುವ ನೀರು-ಅನ್ನ-ವಾಯು-ಆಕಾಶ ಇತ್ಯಾದಿ ನವಾವರಣಗಳ ಆಚೆಗೂ ಇರುವ ಶ್ರೀಹರಿಯೇ, ನಾನು ನಿನ್ನ ದಾಸನಾಗಿರುವೆ.ಹೇ ಸರ್ವೋತ್ತಮನೇ ಮತ್ತೆ ಮತ್ತೆ ನಾನು ನಿನ್ನ ಕಿಂಕರನೆಂದು ನಿವೇದಿಸಿಕೊಳ್ಳುತ್ತೇನೆ.

34. All I beg of you is only your kind grace. You have been different from water-food-air-space- the nine coverings. Oh Lord supreme, I am your servant. I feel I am honoured being your humble servant.

**पुनः पुनः किङ्करोऽस्मि तवाहं पुरुषोत्तम ।**
**आसनाद्यनुयागान्तमर्चनं यन्मया कृतम् ।।**

**(भाव) भोगहीनं क्रियाहीनं मन्त्रहीनमभक्तिकम् ।**
**तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु ।। ३५ ।।**

भुज्यत इति भोगोऽन्नादिनैवेद्यं तेन हीनम् । आत्मसात् इति अव्ययम् । विभाषा सति कार्त्स्न्ये इति सातिप्रत्ययः । यद्वा आत्माधीनमित्यर्थः । कदाहं राजराजेन इत्याद्युक्तप्रकारेण स्वप्रेष्यं कुर्विति भावः । तदधीनवचने च इति सातिप्रत्ययः ।। ३५ ।।

35. ಭಕ್ತಿ-ನೈವೇದ್ಯ ಪದಾರ್ಥಗಳಿಲ್ಲದ, ಮಂತ್ರ-ತಂತ್ರಗಳಿಲ್ಲದ, ನಾನು ಮಾಡಿದ ಪೂಜೆಯನ್ನು ಸ್ವೀಕರಿಸು. ಅಪರಾಧಗಳನ್ನು ಮನ್ನಿಸು. ನಿನ್ನ ದರ್ಶನ ನೀಡು.

35. Accept my humble worship, my devotion, and my offerings made to you. Forgive all my sins. Grace me with your look.

**इति स्तोत्रेण देवेशं स्तुत्वा मधुनिघातिनम् ।**
**यागावसानसमये देववदेवस्य चक्रिणः ।**
**नित्यं किङ्करभावेन स्वात्मानं विनिवेदयेत् ।। ३६ ।।**

**यागावसानसमये** यागस्य देवपूजादेः अवसानसमये । यज- देवपूजा सङ्गतिकरणदानेषु इति धातोर्घञि 'चजोः कुघिण्यतोः' (पा.सू. ७.३.५२) इति कुत्वे वृद्धौ च याग इति रूपम् । देवदेवस्य इति देवानाम् इन्द्रादीनां देवस्य देवत्वप्रदस्य इत्यर्थः । 'नित्यो नित्यानाम्' इत्यत्र एवं जातीयकं व्याख्यानाट्टीकायाम् ।

**विनिवेदयेत्** इति ।। एतेनान्यं प्रत्युपदेशरूपमिदं ब्रह्मणो वचनम् इति नित्यापरोक्षब्रह्मणश्चतुर्मुखब्रह्मणः कथं 'लोकं वैकुण्ठनामानम्' इत्यादिना लोकादिदिदृक्षोक्तिः इति परास्तम् । क्वचित्तु धर्मार्थकाममोक्षेष्वित्यादौ लोकानुजिघृक्षया ब्रह्मा स्वप्रार्थनाप्रकारमभिदधाविति ज्ञेयम् ।। ३६ ।।

*।। इति श्रीमदार्यानन्ताचार्यपूज्यपादाराधकेन तत्तनुजेन बालशर्मणा विरचितायां जितन्तेस्तोत्रविवृतौ वैजयन्त्यां प्रथमोऽध्यायः ।। १ ।।*

36. ಮಧು ಎಂಬ ದೈತ್ಯನನ್ನು ಸಂಹರಿಸಿದ ದೇವೋತ್ತಮನಾದ ಶ್ರೀಹರಿಯನ್ನು ಈ ಸ್ತೋತ್ರದಿಂದ ಕೊಂಡಾಡಿ ಪೂಜಾವಸಾನಕಾಲದಲ್ಲಿ ತನ್ನನ್ನು ದಾಸನೆಂದು ನಿವೇದಿಸಿಕೊಳ್ಳುತ್ತ ಸರ್ವವನ್ನೂ ಅವನಿಗೆ ಅರ್ಪಿಸಬೇಕು.

36. Sri Hari is praised, and glorified by this stotra (hymn) . During the time of worshipping and we should submit and surrender completely with total humility and devotion.

## ।। अथ द्वितीयोऽध्यायः ।।

**ब्रह्मोवाच –**

**जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।**
**नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ।। १ ।।**

**जितन्त** इति ।। हे **विश्वभावन** जगदुत्पादक हे **हृषीकेश** हृषीकाणाम् इन्द्रियाणाम् ईश । 'न मे हृषीकाणि पतन्त्यसत्पथे' (भा.२.७.३३) इति इन्द्रिये हृषीकशब्दस्य भागवते प्रयोगात् । महांश्चासौ पुरुषः पूर्णषाड्गुण्यश्च तत्सम्बुद्धिः । पूर्वैर्ब्रह्मादिभिर्जायतेऽभिष्यज्यत इति पूर्वजस्तत्सम्बुद्धिः । 'यस्तद्वेद स पितुष्पिता सत्' इति श्रुतेः । 'भूयिष्ठां ते नम उक्तिं विधेम' (ईशा.उ. २०) इति श्रुतिमनुरुध्याह **ह्न ते नमस्ते नम** इति ।। एवमेवासकृन्नमः-शब्दोक्तेराशयो अन्यत्रापि ज्ञेयः । तदुक्तं भागवते । 'अर्हसि मुहुरर्हत्तमार्हण-मस्माकमनुपथाना नमोनम इत्येतावत्सदुपाशिक्षितम्' (भा.ग. ५.४.५) इति ।। १ ।।

1. ಕಮಲದಂತೆ ಅರಳಿದ ಕಂಗಳುಳ್ಳವನೇ, ಈ ವಿಶ್ವದ ಜನಕನೇ, ಇಂದ್ರಿಯಗಳ ಪ್ರೇರಕನೇ ಪರಿಪೂರ್ಣನೇ, ವಿಶ್ವದ ಮೊದಲು ಅಭಿವ್ಯಕ್ತನಾದವನೇ, ದುಷ್ಟರನ್ನು ದಮನ ಮಾಡಿದ ಶ್ರೀಹರಿಯೇ ನಿನಗೆ ನಮನಗಳು.

1. To the Lord of the Universe, Sri Hari , who has eyes like lotus fully bloomed, the creator, father of the entire Universe motivator of all senses, the controller of all presiding deities of all senses and the one who expresses himself in a form and the sure destroyer of all the vices and wicked, I bow down prostrating again and again.

**विज्ञापनमिदं देव श्रृणुष्व पुरुषोत्तम ।**
**नरनारायणाभ्यां च श्वेतद्वीपनिवासिभिः ।। २ ।।**

**नरनारायणाभ्याम्** इति ।। नरोऽर्जुनः ।नारायणः कृष्णः ।ताभ्यां पूज्यस इत्यन्वयः । 'ब्राह्मे मुहूर्ते चोत्थाय वार्युपस्पृश्य माधवः । दध्यौ प्रसन्नकरण आत्मानं तमसः परम्' (भा. १०.७७.४ ) इति भागवतोक्तेः ।नारायणपूज्यत्वं ज्ञेयम् ।यद्वा नरनारायणाभ्यां बलकृष्णाभ्यां दिव्यैरपशब्दादिदोषविधुरतया स्तुत्यैर्मन्त्रैर्गुप्तभाषणैः परशुरामरूपस्त्वं पूज्यस इत्यर्थः । रामकृष्णयोः गोमन्तदुर्गप्रस्थानप्रस्तावे

**'स रामानुगतः श्रीमानुत्तीर्य यमुनां हरिः ।**
**देशान् बहूनतिक्रम्य पर्वतान् सरितो गिरीन् ।**
**गच्छन् क्वचिद्वनोद्देशे वृक्षमूलनिवासिनम्।**
**ददर्श कञ्चन मुनिं जटामण्डलमण्डितम् ।**
**चीरकृष्णाजिनधरं कमण्डलुविराजितम् ।**
**समाधौ समुपाविष्टं तेजसा भास्करोपमम् ।**
**फलमूलकृताहारं वृतं शिष्यशतैर्मुनिम् ।**
**दृष्ट्वा परमसन्तुष्टौ रामकृष्णौ जगत्पती ।**
**प्रणामं चक्रतुर्वीरौ यथान्यायमतन्द्रितौ ।**
**इदं चोवाच भगवान् कृष्णस्तं मुनिपुङ्गवम् ।**
**नमस्ते भार्गव श्रीमन् जामदग्न्य तपोधन ।**
**रामकृष्णौ स्मृतावावां क्वचित्ते श्रवणं गतौ ।**
**इत्युक्तस्तेन धर्मात्मा वासुदेवेन भार्गवः ।**
**निरीक्ष्य माधवौ प्राह प्रीत्युत्फुलमुखेक्षणः ।**
**स्वागतं ते यदुश्रेष्ठ साग्रजाय महात्मने ।**
**जाने त्वां यदुषूत्पन्नं भगवन्तमधोक्षजम् ।।'** ( भाग. १०.५२.१७-२४)।

इत्यादिनादशमभागवतोक्तेः । 'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् ।। न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवंश्चित्रमर्च' (१०.११२०.९) इति श्रुतिश्च ।। २ ।।

**नारदाद्यैर्मुनिगणैः सनकाद्यैश्च योगिभिः ।**
**ब्रह्मेशाद्यैः सुरगणैः पञ्चकालपरायणैः ।**
**पूज्यसे पुण्डरीकाक्ष दिव्यैर्मन्त्रैर्महात्मभिः ॥ ३ ॥**

**योगिभिः** ज्ञानयोगिभिः कर्मयोगिभिश्च **दिव्यैः** अपौरुषेयतया स्तुत्यैः **मन्त्रैः** पुरुषसूक्तादिभिः करणैः । **सुरगणैः** कर्तृभिः । महानात्मा मनो येषां ते तथोक्तास्तैः ॥ ३ ॥

2-3. ಸರ್ವೋತ್ತಮನೂ ಕ್ರೀಡಾದಿಗುಣಸಂಪನ್ನನೂ ಕಮಲದಂತೆ ಅರಳಿದ ಕಂಗಳುಳ್ಳವನೂ ಆದ ಶ್ರೀಹರಿಯೇ! ನಮ್ಮ ವಿಜ್ಞಾಪನೆಯನ್ನು ಆಲಿಸು. ಶ್ವೇತದ್ವೀಪದಲ್ಲಿ ವಾಸಿಸುವ ನರ-ನಾರಾಯಣರಿಂದ ನಾರದರೇ ಮೊದಲಾದ ಮುನಿಶ್ರೇಷ್ಠರಿಂದ ಸನಕ ಸನಂದನರೇ ಮೊದಲಾದ ಜ್ಞಾನಯೋಗಿಗಳಿಂದ ಬ್ರಹ್ಮ-ರುದ್ರಾದಿದೇವತೆಗಳಿಂದ ಹಾಗೂ ಆಯಾ ಕಾಲ ಧರ್ಮಕ್ಕನುಗುಣವಾಗಿ ಉಪಾಸನೆ ಮಾಡುವ ದೇವ-ಋಷಿಗಳಿಂದ ಅಪೌರುಷೇಯವಾದ ವೇದಮಂತ್ರಗಳಿಂದ ಪೂಜಿತನಾಗಿರುವಿ.

2-3. Oh Lord ! You have been the supreme, the lotus-eyed Sri Hari. Kindly listen to my repeated requests and appeals. You have been worshipped by the great seers of very high order like Sanaka and Sananda.

Deities like Brahma and Rudra, the great Rishi like Narada who are enriched by knowledge from time to time, reciting Apourusheya (non-authored) have been worshipping you.

**पाषण्डधर्मसङ्कीर्णे भगवद्भक्तिवर्जिते ।**
**कलौ जातोऽस्मि देवेश सर्वधर्मबहिष्कृते ॥ ४ ॥**

**पाषण्डधर्म** इति । ते च 'रुद्राक्षं कङ्कणं हस्ते जटा चैका च मस्तके । कपालं भस्मना स्नानं लकुटं कलशार्चनम्' (न्यायसुधा. अ-२,पा-१,सू-१. अनुव्या, श्लो.४४२ उक्त कालमुखानां वचनम्) इत्यादियुक्तिसुधोदाहृत-वचनाज्ज्ञेयाः ॥ ४ ॥

4. ವೇದ ಹಾಗೂ ವಿಷ್ಣುದ್ವೇಷಿಗಳಿಂದ ಕೂಡಿದ, ಹರಿಭಕ್ತಿಗೆ ಪ್ರಾಶಸ್ತ್ಯ ಇಲ್ಲದ, ಎಲ್ಲ ವೇದೋಕ್ತಧರ್ಮಗಳ ಅನುಷ್ಠಾನವಿಲ್ಲದ ಕಲಿಯುಗದಲ್ಲಿ ನಾನು ಜನಿಸಿರುವೆ.

4. Oh Lord ! I am born during this Kali era where there is utter hatred for Vedas and devotees of Vishnu. During this era, the directives and injunctions are totally disregarded with contempt.

**कथं त्वामसमाचारः पापप्रसवभूरुहः ।**
**अर्चयामि दयासिन्धो पाहि मां शरणागतम् ।। ५ ।।**

**असमाचारः** असाध्वाचारः ।। ५ ।।

**तापत्रयदवाग्नौ मां दह्यमानं सदा विभो ।**
**पाहि मां पुण्डरीकाक्ष केवलं कृपया तव ।। ६ ।।**

**जन्ममृत्युजराव्याधिदुःखसन्तप्तदेहिनम् ।**
**पालयाशु दृशा देव तव कारुण्यगर्भया ।। ७ ।।**

तापानाम् अध्यात्मिकाधिभौतिकाधिदेविकानां त्रयः त एव दवाग्निर्वनवह्निः तस्मिन् । समुदायाशयमेकवचनम् । तापकत्वस्यैकप्रकारत्वाशयं वा ।। ६ ।।

तत्रादिमं तापं विशदयन् स्वस्य कृपापूर्वकमवलोकनं तदौषधम् इति भावेन प्रार्थयते - **जन्म** इत्यादिना । जन्म च मृत्युश्च जरा च व्याधिश्चैतैः दुःखानि तैः सन्तप्तश्चिन्तायुक्तश्चासौ देही प्राणी च तथोक्तस्तम् । अथ वा जन्मादय एव दुःखानि दुःखसाधनानि [१]वह्नितुल्यानि तैः सन्तप्तःभर्जितश्चासौ देहश्च सोऽस्यास्ति इति तथोक्तः तम् । 'आनन्दमयपूर्विणाम्' । 'इशतज्ज्ञानवेदाक्ष-जानुमामातृपूर्विणः' । 'परिस्फुरत्कुण्डलमौलिमालिनम्' इत्यादाविवात्रे-निप्रत्ययः समाधेयः ।।

**दृशा** अवलोकनेन । **कारुण्यगर्भया** करुणापूर्विकया **अशक्यम्**

१. वह्निस्तैः - मुद्रितपुस्तके

अशक्यानि । सुपां सुलुक् (पा.सू. ७.१.३९) इत्यादिना बहुवचन-स्यैकवचनादेशः ।। ७ ।।

5. ಶುದ್ಧವಾದ ಆಚಾರವಿಲ್ಲದ, ಪಾಪಕಾರ್ಯಗಳಲ್ಲಿ ಸದಾ ರತನಾದ ನಾನು ನಿನ್ನನ್ನು ಹೇಗೆ ಅರ್ಚಿಸಲಿ? ದಯಾಸಾಗರನೆ, ಶರಣಾಗತನಾದ ನನ್ನನ್ನು ರಕ್ಷಿಸು.

6. ಕಮಲದಂತೆ ಅರಳಿದ ಕಂಗಳುಳ್ಳ ಶ್ರೀಹರಿಯೇ ಆಧಿಭೌತಿಕ-ಆಧ್ಯಾತ್ಮಿಕ-ಆಧಿದೈವಿಕ ತಾಪಗಳೆಂಬ ಕಾಡ್ಗಿಚ್ಚಿನಲ್ಲಿ ಬೆಂದು ಬಸವಳಿದ ನನ್ನನ್ನು ಕೇವಲ ಕರುಣೆಯಿಂದ ರಕ್ಷಿಸು.

7. ಹುಟ್ಟು-ಮರಣ-ಮುಪ್ಪು-ರೋಗಗಳು-ದುಃಖಾನುಭವಗಳಿಂದ ಜರ್ಜರಿತನಾದ ನನ್ನನ್ನು ಕರುಣಾದೃಷ್ಟಿಯಿಂದ ವೀಕ್ಷಿಸು.

5. Oh Lord ! How can I worship you ? I am involved in unsrcruplous habits and have committed unpardonable sins. Oh ocean of kindness, protect me. I have surrendered to you totally.

6. Protect me ! Protect me; Oh Lotus-eyed supreme, I am burnt down to ashes in the forest fire of Adhibhoutika, Adhidaivika and Adhyatma. I am fagged out and dead tired. Kindly look at me and help me by blessings.

7. I have been tired and sick of the cycle of life and death, ageing, growing old day by day, and passing through the hard-mill. Look at me in all kindness.

**इन्द्रियाणि मया जेतुमशक्यं पुरुषोत्तम ।**
**शरीरं मम देवेश व्याधिभिः परिपीडितम् ।। ८ ।।**

**मनो मे पुण्डरीकाक्ष विषयानेव धावति ।**
**वाणी मम हृषीकेश मिथ्यापारुष्यदूषिता ।। ९ ।।**

**एवं साधनहीनोऽहं किं करिष्यामि केशव ।**
**रक्ष मां कृपया कृष्ण भवाब्धौ पतितं सदा ।। १० ।।**

अशक्यत्वमुपपादयितुं तत्र प्रबलदोषानाहह **शरीरम्** इत्यादिना ।
।। ८-१० ।।

8. ಸರ್ವೋತ್ತಮ ಶ್ರೀಹರಿಯೇ ಇಂದ್ರಿಯಗಳನ್ನು ಗೆಲ್ಲುವುದು ಬಹುಕಠಿಣ. ನನ್ನ ಶರೀರವು ನಾನಾ ರೋಗಗಳಿಂದ ಜರ್ಜರಿತವಾಗಿದೆ.

9. ನನ್ನ ಮನಸ್ಸು ಭೋಗವಸ್ತುಗಳ ಬಳಿಗೆ ಚಲಿಸುತ್ತದೆ. ನನ್ನ ನಾಲಿಗೆ, ಸುಳ್ಳು ಮತ್ತು ಕಟುವಾದ ಮಾತನಾಡುವುದರಿಂದ ಮಲಿನವಾಗಿದೆ.

10. ಹೀಗೆ ಜ್ಞಾನ ಸಾಧನವಾದ ಇಂದ್ರಿಯಗಳ ಮೇಲೆ ಹಿಡಿತ (ನಿಯಂತ್ರಣ) ಇಲ್ಲದ ನಾನು ಏನು ಸಾಧನೆ ಮಾಡಬಲ್ಲೆ? ಓ ಸಿರಿಯರಸನೇ ? ಸಂಸಾರ ಸಾಗರದಲ್ಲಿ ಮುಳುಗಿದ ನನ್ನನ್ನು ರಕ್ಷಿಸು.

8. My mind is endlessly chasing after the useless and worldly pleasures I am finding it very hard to overcome and take control over the sensory organs; I am torn to rags and pieces by all kinds of physical and mental diseases.

9. My mind runs after the material pleasures. My tongue is ever hungry and thirsty to utter lies and is quick to utter harsh words, and is always corrupt.

10. Oh Lord ! What can I do when I do not have any control over my senses. Oh the Lord of Lakshmi ! Lift me from the depths of despair of life.

**अपराधसहस्राणां सहस्रमयुतं तथा ।**
**अर्बुदं चाप्यसङ्ख्येयं करुणाब्धे क्षमस्व मे ।। ११ ।।**

अपराधसहस्राणामित्येतदर्बुदमित्यत्रापि सम्बध्यते ।। ११ ।।

11. ನಾನು ಸಾವಿರಾರು ಅಪರಾಧ ಮಾಡಿರುವೆ. ಹತ್ತು ಸಾವಿರ. ಅರ್ಬುದ ಸಂಖ್ಯೆಯ ಅಪರಾಧಗಳನ್ನು ಮಾಡಿರುವೆ. ಒಟ್ಟಾರೆ ನನ್ನ ಅಪರಾಧಗಳಿಗೆ ಎಣಿಕೆ ಇಲ್ಲ. ಓ ಕರುಣಾ ಸಾಗರನೇ ಕ್ಷಮಿಸು.

11. I have committed tens of thousands, tense of millions, no, countless blunders and sins. Oh, ocean of kindness, forgive me.

**यं चापराधं कृतवानज्ञानात्पुरुषोत्तम ।**
**भक्त(अज्ञ)स्य मम देवेश तत्सर्वं क्षन्तुमर्हसि ।। १२ ।।**

**अज्ञत्वादल्पशक्तित्वादालस्याद्दुष्टभावनात् ।**
**कृतापराधं कृपणं क्षन्तुमर्हसि मां विभो ॥ १३ ॥**

अज्ञानात् पुरुषोत्तमेत्यनेनापराधानामज्ञानमात्रहेतुकत्वमुक्तम् इति भ्रमं निराचष्टे ॥ **अज्ञत्वात्** इत्यादिना ॥ १३ ॥

12. ಭಕ್ತನಾದ ನಾನು ಅಜ್ಞಾನದಿಂದ ಮಾಡಿದ ಅನಂತ ಅಪರಾಧಗಳನ್ನು ಕೃಪೆಯಿಂದ ಕ್ಷಮಿಸು.

13. ಅಜ್ಞಾನ-ಅಲ್ಪಶಕ್ತಿ-ಆಲಸ್ಯ-ದುರ್ಬುದ್ಧಿಗಳಿಂದ ನಾನಾಪರಾಧಗಳನ್ನು ಎಸಗಿದ್ದೇನೆ. ದುರ್ಬಲನಾದ ನನ್ನ ಮೇಲೆ ಕ್ಷಮೆ ಇರಲಿ.

12. I am your devotee. But I have committed infinite blunders due to my sheer ignorance. Your are kind, please excuse me.

13. I have committed blunders due to my ignorance, limited strength along with lazinness and crookedness, Oh Lord, be kind to me, the helpless one.

**अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।**
**तानि सर्वाणि मे देव क्षमस्व पुरुषोत्तम ॥ १४ ॥**

**कृतापराधम्** इत्यादि सामान्योक्तेः दिवैवापराधोऽकारि इति भ्रान्तिं लोकानां निरस्यन् पुनः क्षमापयति ह्न **अपराध** इति ॥ **सहस्राणि** अनन्तानि । 'सहस्रशीर्षा पुरुषः' ॥ ( ऋ.१०.९०.१) इत्यादिवत् ॥ १४ ॥

14. ಹಗಲು-ರಾತ್ರಿ ನಾನು ಸಾವಿರಾರು ಅಪರಾಧಗಳನ್ನು ಎಸಗಿರುವೆ. ಸರ್ವೋತ್ತಮನಾದ ಶ್ರೀಹರಿಯೇ ನನ್ನ ಎಲ್ಲ ಅಪರಾಧಗಳನ್ನು ಕ್ಷಮಿಸು.

14. Day and night. I have committed tens of thousands mistakes. Oh, the Lord supreme Sri Hari, ignore all my sins and excuse me.

**यज्जन्मनः प्रभृति मोहवशं गतेन**
**नानापराधशतमाचरितं मया ते ।**

**अन्तर्बहिश्च सकलं तव पश्यतो हि**
**क्षन्तुं त्वमर्हसि हरे करुणावशेन ॥ १५ ॥**

अपराधाचरणस्यासाक्षिकत्वान्मृषेयमात्मनोऽपराधितोपालम्भ इत्याशङ्का-निरसनपूर्वकमादरातिशयेन पुनः क्षमापयति ह्व **यत्** इति ॥ **जन्मनः** प्रभृति जन्मारभ्या 'प्रभृतियोगाज्जन्मनः' इति पञ्चमी । अपादने पञ्चमी (पा.सू. २.३.२८) इति सूत्रे कार्तिक्याः प्रभृति इति भाष्ये प्रयोगात् । मोहवशं गतेन नटनवञ्चनवशंगतेन । 'एष मोहं सृजाम्याशु' इत्यत्र 'मुह्यतेऽनेनेति मोहो नटनं वञ्चनं वा' इति टीकोक्तेः । मिथ्याज्ञानजनकीभूतानाचारो नटनम् । मिथ्या-ज्ञानजनकं वचनं वञ्चनम् । अज्ञानसम्शयविपर्ययवशं गतेन वा । 'नष्टो मोहः स्मृतिर्लब्धा' (गी. १८.७३) इति गीताविवृतावेव विवृतेः । **अन्तर्बहिश्च** अते व्याप्ते त्वयि । 'सयोतोकत' इति श्रुतेः । अधिकरणत्वविवक्षया सप्तमि । मया तव नानाविधमपराधशतं आचरितम् । व्याप्तत्वादेव सकलं पश्यतः तव इति । शेषे षष्ठी (पा.सू.२.३.५०) । पश्यतः तव **करुणावशेन** इति वा ।

तत्तु नानापराधशतं कर्म हे **करुणावश** हे इनस्वामिन् । त्वं क्षन्तुमर्हसि इति योजना । अत्र सकलं पश्यतः तव इत्यनेन मया कृतानाम् अपराधानां सर्वसाक्षी त्वमेव निराक्षीत्युक्तं भवति ॥ १५ ॥

15. ಅಜ್ಞಾನವಶನಾದ ನಾನು ಹುಟ್ಟಿನಿಂದಾಂರಭಿಸಿ ಲೆಕ್ಕವಿಲ್ಲದಷ್ಟು ಅಪರಾಧ ನಿನಗೆ ಎಸಗಿದ್ದೇನೆ. ಒಳ-ಹೊರಗೆ ವ್ಯಾಪ್ತನಾಗಿರುವ ನಿನ್ನ ಎದುರಿನಲ್ಲಿಯೇ (ಸಾಕ್ಷಿಯಾಗಿ) ಮಾಡಿದ ಈ ಅಪರಾಧಗಳನ್ನೂ ಕರುಣಾಮಯನಾದ ನೀನು ಕ್ಷಮಿಸು.

15. Being under the firm grip of ignorance right from my birth, everytime I have committed countless mistakes, sins and blunders right in your presence. You are pervading everywhere inside me and outside me as a witness to all my evil acts. Oh Lord ! the embodiment of kindness, forget my mistakes and forgive me.

**कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।**
**केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ।। १६ ।।**

**।। इति श्रीपञ्चरात्रागमे जितन्तेस्तोत्रे द्वितीयोऽध्यायः ।। २ ।।**

एतावतापराधान् क्षमाप्याधुना -

**'स्वामी त्वं जलजापते प्रियकराः प्राणाः शरीरं गृहं**
**पूजा ते विषयोपभोगरचना सम्यक् समाधिः स्तुतिः ।**
**सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो**
**यद्यत्कर्म करोमि तत्तदखिलं विष्णो तवाराधनम्' ।।**

इति वचनानुसारेण सर्वा अपि चेष्टाः केशवाराधनानि स्युः इति प्रार्थयते ह्व **कर्मणा** इति । **आराधने** आराधनं पूजा स्यात् इत्यर्थः । यद्वा आराधन इति [1]तादर्थ्ये सप्तमी । 'चर्मणि द्वीपिनं हन्ति' इति यथा । त इत्यस्य शेषेण केशव इति सम्बोधनं वा । कं ब्रह्माणमीशं रुद्रं च वर्तयतीति केशवः । 'हिरण्यगर्भः कः प्रोक्त ईशः शङ्कर एव च । सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान्' (गी.भा. २.५४ उदाहृत हरिवंश वचनम्) । केशशब्दयोः कर्मणोरुपपदयो-रन्तर्णीतण्यर्थाद्वृतुवर्तन इत्यस्मात् [2]अन्यत्रापि दृश्यते इति डः ।। १६ ।।

***।। इति श्रीमदार्यानन्ताचार्यपूज्यपादाराधकेन तत्तनुजेन***
***बालशर्मणा विरचितायां***
***जितन्तेस्तोत्रविवृतौ वैजयन्त्यां द्वितीयोऽध्यायः ।। २ ।।***

16. ಕರ್ಮ-ಮನಸ್ಸು-ವಾಗಿಂದ್ರಿಯ ಮೊದಲಾದವುಗಳಿಂದ ನಾನು ಯಾವ ಕಾರ್ಯಗಳನ್ನು ಮಾಡುವೆನೋ ಅವೆಲ್ಲವೂ ಪ್ರತಿಜನ್ಮದಲ್ಲಿ ಕೇಶವನ ಆರಾಧನಾ ರೂಪವಾಗಿರಲಿ .

16. Oh Lord ! Whatever I do in thought, speech and action. let everything be dedicated to your service and as a worship to you, my Lord Sri Krishna.

---

१. तात्पर्ये मु. २. डेन्यत्रापि टपत इति डः मु.

## ।। अथ तृतीयोऽध्यायः ।।

**ब्रह्मोवाच –**

**जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।**
**नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ।। १ ।।**

**जितन्त** इति । 'विश्वो वायुः समुद्दिष्टः' इति बृहद्भाष्योक्तेः । तस्मिन् **भावना** अतिवासना ध्यानम् इति यावत् । स तथोक्तस्तत्सम्बुद्धिः । 'भावना त्वतिवासना' (गी.भा. ८.७) इति गीताभाष्योदाहृतवचनात् उद्गीथाख्यस्य विष्णोर्विशिष्टप्रतिमावायुरेव इति छान्दोग्यभाष्योक्तेः । अविश्वभावन इति पदच्छेदेन अविश्व विश्वभिन्न इति भावना यस्य स तथोक्तः तत्सम्बुद्धिर्वा । 'अविश्वो विश्वकर्ताजः' इति श्रुतेः ।। १ ।।

1. ವಾಯುದೇವನಿಗೆ ಅನುಗ್ರಾಹಕನೇ, ಕಮಲದಂತೆ ಅರಳಿದ ಕಂಗಳುಳ್ಳವನೇ, ದುಷ್ಟರನ್ನು ದಮನಮಾಡುವ ನಿನಗೆ ನಮನಗಳು. ಓ ಇಂದ್ರಿಯಗಳ ನಿಯಾಮಕನೇ ಮಹತ್ತತ್ತ್ವಾಭಿಮಾನಿಯಾದ ನಾಲ್ಮೊಗನಿಗೆ ಜನ್ಮ ನೀಡಿದವನೇ ನಿನಗೆ ನಮನಗಳು.

1. Lord ! you have bestowed all your kind grace to Vayudeva, Oh Lotus-eyed Lord ! you destroy the wicked. Oh, controller of all senses ! You are the motivator of all senses. You have given birth to the four-faced Brahma, the presiding deity of Mahattatva. To you I bow down again and again in all humility and devotion.

**नमस्ते वासुदेवाय शतानन्दचिदात्मने[१] ।**
**अध्यक्षाय स्वतन्त्राय निरपेक्षाय शाश्वते ।। २ ।।**

**शतानन्दो** ब्रह्मा तस्य **चित्** ज्ञानम् आदत्ते अनुभावयति आप्नोति प्रापयति इति वा शतानन्दचिदात्मा तस्मै इत्यर्थः । आङ्पूर्वाददद आप्नोतेर्वान्तिर्णीतण्यर्थात् मन् । 'यच्चाप्नोति यदादत्ते' इत्यादेः । **शान्तानन्द** इति पाठे शान्तानां भगवन्निष्ठबुद्धीनामानन्दचिती सुखज्ञाने इत्यादि प्राग्वत् । निष्क्रान्तः

---

१. शान्तानन्द . ख.

अपेक्षायाः **निरपेक्षः** । तदाह सूत्रे 'न प्रयोजवत्त्वात्' (ब्र.सू.२.१.३३) इत्युक्तत्वात् इति। निरादयः क्रान्ताद्यर्थे पञ्चम्या' (वार्तिकम्- पा.सू. १.४.७९) इति समासः । तत्र हेतुः **स्वतन्त्राय** इति । **शाश्वते** मोक्षकर्त्रे । 'तत्प्रसादात् परां शान्ति स्थानं यास्यति शाश्वतम्' इत्यत्र नित्यवाचकतया प्रसिद्धशाश्वतशब्दात्तत्करोतिण्यन्तात् क्विपीष्टवद्भावेन टिलोपे णिलोपे च तान्तोयं शब्दः । मोक्षदात्र इति यावत् । आकाशादिनित्यस्रस्ट्रे । 'आत्मन आकाशः सम्भूतः' (तै.उ. ब्रह्मवल्लि, मं-१) इत्यादिश्रुतेः । यद्वा शाश्वत इति षष्ठमहाभाष्यवचनप्रामाण्याच्छश्वच्छब्दादण्प्रत्यये शाश्वत इत्यकारान्त एवायं शब्दः सप्तम्यन्तः । नित्यमोक्षे निरपेक्षायेत्यन्वयः । असाहायः सन्मोक्षं दातेति भावः । 'विष्णुर्हि दाता मोक्षस्य' इति वचनात् । **अध्यक्षाय** अधिपतये 'अध्यक्षोऽधिपतिः प्रोक्तः' (गी.ता. १.१०) इति गीतातात्पर्योदाहृत-स्मृतेः ।। २ ।।

2. ಚತುರಾನನಿಗೆ ವಿಜ್ಞಾನವನ್ನು ಕರುಣಿಸುವ ವಿಜ್ಞಾನರೂಪಿಯೇ ನಿನಗೆ ನಮನಗಳು. ಸ್ವತಂತ್ರನೂ ಪರಿಪೂರ್ಣನೂ ಮುಕ್ತಿಪ್ರದನೂ ಜಗದೊಡೆಯನೂ ಆದ ನಿನಗೆ ನಮನಗಳು.

2. To the four-faced Brahma, you have given special knowledge. You are the embodiment of all knowledge, everyone of it is special and unique. You are the only one who is perfect and total, who can bestow the liberation. Oh to the Lord of the Universe. I bow down to you prostrating again and again.

**अच्युतायाविकाराय तेजसां निधये नमः ।**
**क्लेशकर्माद्यसंस्पृष्टपूर्णषाड्गुण्यमूर्तये ।। ३ ।।**

**त्रिभिर्ज्ञानबलैश्वर्यवीर्यशक्त्योजसां युगैः ।**
**त्रिगुणाय नमस्तेऽस्तु नमस्ते चतुरात्मने[1] ।। ४ ।।**

१. मधुसूदन. ख.

**अच्युताय** स्वरूपतो गुणैश्च च्युतिरहिताय । 'नात्मा श्रुतेः नित्यत्वाच्च ताभ्यः' (ब्र.सू.२.३.१७) । 'अच्युतो यो गुणैर्नित्यमेवाखिलैः' इत्यादेः । क्लेशः दुःखं कर्मादीत्यादिपदेन जन्मादिपरिग्रहः । तैः **असंस्पृष्ट** असम्बद्धः । 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः ।

त्रिभिर्युगैः षड्भिरित्यर्थः । पूर्णेति पूर्वेण सम्बन्धः । त्रियुगानाह ह्न **ज्ञान** इत्यादिना । **ओजसाम्** । 'चतुर्षु षष्ठी' इति भागवततात्पर्योदाहृतत्वात् । ओजोभिः पूर्णेत्युक्त्या प्राप्तां भेदबुद्धिं निराहह्न **षाड्गुण्यमूर्तये** इति । षाड्गुण्यमेव मूर्तिर्यस्य तथोक्तस्तस्मै । अञ्जसा गुणैः इत्यपि क्वचित् पाठः । तत्र त्रिभिर्गुणैः सत्वादिभिः अस्पृष्टेति बुध्या अस्पृष्टेत्यस्य आकृष्यान्वयः । ज्ञानबलैश्वर्यवीर्यशक्त्योजसाम् ओजोभिः पूर्णेति योजना । पूर्णेत्यत्र मतिबुद्धिपूजार्थेभ्यश्च (पा.सू. ३.२.१८८) इति वर्तमाने क्तः । तत्र चकारस्यानुक्तसमुच्चयार्थत्वात् । क्तस्य च वर्तमान इत्योजसाम् इति षष्ठी प्रसिद्धव्याकरणेनापि [१]समाधेया क। ओज इन्द्रियबलम् । त्रयो गुणा यस्मात् स तथोक्तः तस्मै । 'ससर्ज भगवानादौ त्रीन् गुणान् प्रकृतेः परः' इति वचनात् । चतुर आत्मा चतुर्मुखो यस्मात् स तथोक्तः तस्मै । मधुसूदनाय इत्यपि क्वचित्पाठः । मधुं तन्नामानं दैत्यं सूदयति इति मधुसूदन इति तदर्थः ।।३-४।।

3. ನಿರ್ವಿಕಾರನೂ ತೇಜೋಮಯನೂ (ಜ್ಯೋತಿರೂಪನೂ) ಆದ ಅಚ್ಯುತನಿಗೆ (ಗುಣ ಮತ್ತು ಸ್ವರೂಪಗಳ ವಿನಾಶವಿಲ್ಲದ) ನಮನಗಳು. ದುಃಖ-ಕರ್ಮ-ಜನನಾದಿ ದೋಷಗಂಧವಿದೂರನೂ ಷಡ್‌ಗುಣಸ್ವರೂಪನೂ ಆದ ನಿನಗೆ ನಮನಗಳು.

4. ಜ್ಞಾನ-ಬಲ-ಐಶ್ವರ್ಯ-ಪರಾಕ್ರಮ-ಶಕ್ತಿ-ಕೀರ್ತಿಗಳೆಂಬ ಷಡ್ಗುಣಸ್ವರೂಪನಾದ, ಸತ್ತ್ವ-ರಜಸ್-ತಮೋಗುಣಗಳಿಗೆ ಪ್ರವರ್ತಕನಾದ, ಚತುರ್ಮುಖ ಜನಕನಾದ ನಿನಗೆ ನಮನಗಳು.

3. Oh Lord ! You undergo no change, the source of all brightness...You are Achyuta in every sense of the word, having

१. समा ज्ञेया- मुद्रितपुस्तके

no degradation or destruction in your virtues or forms. You are far, far from even the least trace of birth, death, grief and bondage. You are the embodiment of all comprising six virtues. Oh Lord, to you I bow down in all humility and devotion, again and again.

4. You are the embodiment of knowledge, strength, power and all riches, valiant, name and fame of the highest order, meaning every word. You are the creator of Satwa, Rajas and Tamas. You are the father of four-faced Brahma. To you I bow down in devotion prostrating to you again and again.

**चतुःपञ्चनवव्यूहदशद्वादशमूर्तये ।**
**प्रधानपुरुषेशाय नमस्ते चतुरात्मने[१] ।। ५ ।।**

**प्रधानः** मुख्यपुरुषः जगत्कर्ता, 'पुरुषो जगत्कर्ता' इति टीकोक्तेः । **चतुरात्मने** ।। चतुरा लक्ष्मीः आत्मनि देहे यस्य इति वा तथोक्तः तस्मै । तदुक्तम् आचार्यैः । 'सा दक्षिणामानिनी देवता च सावस्थिता बहुरूपा मदर्था । वामार्धा मे तत्प्रविष्टा यतो हि ततोऽहं स्यामर्धनारायणाख्यः' (म.ता.नि. २०.७४) इति । 'नमस्ते पुरुषोत्तम' इत्यपि क्वचित् पाठः ।। ५ ।।

5. ಸೃಷ್ಟಿಯ ಆರಂಭದಲ್ಲಿ ಅನಿರುದ್ಧ-ಪ್ರದ್ಯುಮ್ನ- ಸಂಕರ್ಷಣ- ವಾಸುದೇವ ಎಂಬ ನಾಲ್ಕು ರೂಪಧರಿಸಿದ, ಕೃದ್ಧೋಲ್ಕ ಮೊದಲಾದ ಐದು ರೂಪಗಳುಳ್ಳ, ನಾರಾಯಣ-ಪರಬ್ರಹ್ಮ ಇತ್ಯಾದಿ ಒಂಬತ್ತು ಮತ್ತು ಮತ್ಸ್ಯ-ಕೂರ್ಮಾದಿ ಹತ್ತು ರೂಪಗಳನ್ನು ಧರಿಸಿದ ಕೇಶವಾದಿ ಹನ್ನೆರಡು ರೂಪಗಳನ್ನು ಧರಿಸಿದ, ಸಿರಿದೇವಿ ಹಾಗೂ ಚತುರ್ಮುಖನಿಗೆ ಒಡೆಯನಾದ, ಅರ್ಧನಾರೀನರರೂಪಿಯಾದ ನಿನಗೆ ನಮನಗಳು.

5. At the beginning of Creation, You expressed yourself in four forms Aniruddha, Pradyumna, Sankarshana and Vasudeva. Again you showed Yourself in another five forms- Kruddholka and others. and again in nine forms Narayana, Parabrahma etc. and again in ten forms Matsya, Kurma etc. Again in twelve forms Keshava and others. You have been the Lord of Lakshmi, having a strange form of half-lady and half -man Ardhanaareeshwara

---

१. नमस्ते पुरुषोत्तम ख.

form. You have been the master of Chaturmukha Brahma. To you I bow down in all humility and devotion again and again.

**अनेकमूर्तये तुभ्यममूर्तायैकमूर्तये ।**
**नारायण नमस्तेऽस्तु पुण्डरीकायतेक्षण ।। ६ ।।**

अनः प्राणः एकमूर्तिर्मुख्यप्रतिमा यस्य स तथोक्तस्तस्मै । 'तद्गुणोतताम्' इत्यत्र ओमाङोश्च (पा.६.१.९५) इत्यत्र चकारेण अन्यत्रापि 'पररूपत्वानुशासनात्' इति सुधोक्तदिशापररूपत्वं ज्ञेयम् । अनेकेष्वप्रधानेषु जीवेषु मूर्तिः यस्य इति वा अनेका मूर्तिः यस्य इति वा । तर्हि परिच्छिन्नत्वं स्यात् इत्यत आह **अमूर्ताय इति** ।। अपरिच्छिनाय इत्यर्थः । एका जगद्भिन्ना मूर्तिः यस्य तस्मै । 'एके मुख्यान्यकेवलाः' इत्यमरोक्तेः । एका अभिन्ना मूर्तिः यस्य इति वा । 'नेह नाना' इत्यादिश्रुतेः । अरा दोषास्तद्विरुद्धा गुणा नाराः तेषामयनमाश्रयः । अराणामयनं न भवतीति नारायणः, तत्सम्बुद्धिः । नगनाकादिशब्दवत् अयं शब्दो ज्ञातव्यः ।। ६ ।।

6. ಮುಖ್ಯಪ್ರಾಣನಲ್ಲಿ ಪ್ರಧಾನವಾಗಿ ಸನ್ನಿಹಿತನಾದ ದೇಶ-ಕಾಲಗಳ ಮಿತಿ ಇಲ್ಲದ ಅನಂತರೂಪನಾದ ಕಮಲದಂತೆ ವಿಶಾಲಕಂಗಳುಳ್ಳ ಓ ನಾರಾಯಣನೇ ನಿನಗೆ ನಮನಗಳು.

6. Oh Lord ! You have been present primarily in Mukhyapraana. You are not bound by any law of time and space. Oh Lord Narayana, to you I bow down in all humility and devotion again and again.

**सुभ्रूललाट सुनस (सुमुख) सुस्मिताधरविद्रुम ।**
**पीनवृत्तायतभुज श्रीवत्सकृतभूषण ।। ७ ।।**

अधरे ओष्ठे विद्रुमाविव यस्य स तथोक्तः तत्सम्बुद्धिः ।। ७ ।।

7. ಆಕರ್ಷಕವಾದ ಹುಬ್ಬು-ಹಣೆ-ಮೂಗು-ಮಿನುಗುವ ಮಂದಹಾಸದಿಂದ ಪೂರ್ಣವಾದ ತುಟಿಗಳುಳ್ಳ ದುಂಡನೆಯಾದ ಮತ್ತು ದಷ್ಟ ಪುಷ್ಟವಾದ ಹಾಗೂ ವಿಶಾಲವಾದ ಭುಜಗಳುಳ್ಳ ಎದೆಯಲ್ಲಿ ಸಿರಿದೇವಿಯನ್ನು ಧರಿಸಿದ ನಿನಗೆ ನಮನಗಳು.

7. Your attractive eye brows, forehead, nose and inviting coral lips round and robust, broad chest housing your consort Lakshmi, are simpty captivating. To you I bow down prostrating with all devotion and humility, again and again.

**तनुमध्यमहावक्ष पद्मनाभ नमोऽस्तु ते ।**
**विलासविक्रमाक्रान्तत्रैलोक्यचरणाम्बुज ॥ ८ ॥**

**नमस्ते पीतवसन स्फुरन्मकरकुण्डल ।**
**स्फुरत्किरीटकेयूरनूपुराङ्गदभूषण ॥ ९ ॥**

**पञ्चायुध नमस्तेऽस्तु नमस्ते पञ्चकालिक ।**
**पञ्चकालरतानां त्वं योगक्षेमं वह प्रभो ॥ १० ॥**

**तनुम्** अल्पं [१]सूक्ष्मं मध्यम् उदरं यस्य स तथोक्तः तत्सम्बुद्धिः । **विलासेन** लीलया **विक्रमेण** पादविक्षेपेण **क्रान्तं** त्रैलोक्यं त्रिलोकी येन स तथोक्तः । तादृशौ चरणौ **अम्बुजे** इव यस्य स तथोक्तः तत्सम्बुद्धिः ॥८-९ ॥

पञ्च आयुधानि प्रहरणानि यस्य स तथोक्तः तत्सम्बुद्धिः । शङ्खचक्रगदापद्म-नारायणमुद्राः पञ्चायुधानि ज्ञेयानि । **योगक्षेमं** मुख्ययोगक्षेमरूपं मोक्षं **वह** प्रापय । 'तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्' (गी.९.२२ ) इति स्वप्रतिज्ञानात् । तत्र उपपत्तिः ह्व प्रभो इति । **प्रभो** समर्थ 'प्रभुरीशः समर्थश्च' इत्यभिधानात् ॥ १० ॥

8. ತೆಳುವಾದ ಹೊಟ್ಟೆ ವಿಶಾಲವಾದ ಎದೆಯುಳ್ಳ, ಅನಾಯಾಸವಾಗಿ ಹೆಜ್ಜೆ ಇಟ್ಟು ಮೂಲೋಕಗಳನ್ನು ಅಳೆದ ಪಾದಕಮಲವುಳ್ಳ ಪದ್ಮನಾಭನಿಗೆ ನಮನಗಳು.

9. ಪೀತಾಂಬರ ಧರಿಸಿದ, ಹೊಳೆಯುವ ಮಕರ-ಕುಂಡಲಧಾರಿಯಾದ ಹೊಳೆಯುವ ಕಿರೀಟ-ಕೇಯೂರ-ಕಾಲ್ಗೆಜ್ಜೆ-ಬಳೆಗಳಿಂದ ವಿಭೂಷಿತನೇ ನಿನಗೆ ನಮನಗಳು.

10. ಶಂಖ-ಚಕ್ರ-ಗದಾ-ಪದ್ಮ-ಖಡ್ಗ ಧರಿಸಿದ, ವಸಂತವೇ ಮೊದಲಾದ ಐದು

१. सूक्ष्मम् उदरम्- मुद्रितपुस्तके

ಕಾಲಗಳಲ್ಲಿ ನಿಯಾಮಕನಾಗಿ ಐದು ರೂಪದಿಂದಿರುವ, ಆಯಾಕಾಲದಲ್ಲಿ ಮಾಡಬೇಕಾದ ಕರ್ತವ್ಯಗಳಲ್ಲಿ ನಿಷ್ಠರಾದ ಭಕ್ತರ ಯೋಗಕ್ಷೇಮವನ್ನು ನೋಡು.

8. Your slim waist, strong ,robust and broad chest are simply enticing. You have with ease measured the three worlds with your lotus-like feet. Oh Padmanabha, the Lord having the lotus in the navel, to you I bow down in all humility and devotion.

9. Oh Lord ! Dressed in yellow silks, ornamented with makarakundala, crown, bracelets and anklets with jingling and tinkling bells made of precious gems (and holding Shanka, Chakra, Gada and Padma,) with a sword and expressing in five forms during five seasons such as Vasantha etc. Oh Lord ! take a kindly look at those devotees of yours who perform their prescribed duties perfectly, following the scriptures in letter and sprit. To you I bow down prostrating in all humility and devotion.

10. Oh Lord ! What can I do when I do not have any control over my senses. Oh the Lord of Lakshmi. Lift me from the depths of despair of life.

**नित्यज्ञानबलैश्वर्य भो गोपकरणाच्युत ।**
**नमस्ते ब्रह्मरुद्रादिलोकयात्राप्रवर्तक ॥ ११ ॥**

**नित्य** इति । भो इति सम्बोधने गोपानां नन्दादीनां करणैरिन्द्रियैरच्युत सदा तैर्ध्यात इत्यर्थः । नित्यज्ञानबलैश्वर्याणां भोगेनानुभवेन निमित्तेन उप अधिकैः करणैः ज्ञानकर्मसाधनैरिन्द्रियैः **अच्युतः** च्युतिरहितः तत्सम्बुद्धिर्वा। 'तदात्मानमेवावेदहं ब्रह्मास्मि' इति श्रुतेः । 'उप' अधिक इति कर्मनिर्णयोदाहृत[१]सूत्रात् । अत एव 'उपरतस्तितिक्षुः' (ब्र.सू.भा.उ.व. १.१.१) इत्यत्र 'उप अधिके विष्णौ रतः' इनि तत्त्वप्रदीपिकायां याख्यातम् । अत्रेन्द्रियाणामाधिक्यं च 'सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान्' । 'केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः' इत्यादिगीतातात्पर्याद्युदाहृत-प्रमाणानुसारेण ज्ञेयम् । विशेषस्त्वन्यत्र द्रष्टव्यः । ब्रह्मणश्चतुर्मुखस्य रुद्रादि-

१. दाहृतमूशत्- मुद्रितपुस्तके

लोकयात्रायाः सृष्टेः प्रवर्तक । 'अथ तत्कृपया विष्णुः सृष्टिकर्मण्ययोजयत्' इति श्रुतेः । ब्रह्मरुद्रादीनां लोकयात्रायाः स्वस्वलोकंप्रति प्रयाणस्य प्रवर्तकः प्रेरकेति वा । एतच्च 'यातेष्टं विबुध श्रेष्ठाः सर्वेषां भद्रमस्तु वः' इत्यादि भागवत-वचनं सिद्धम् । तृजकाभ्यां कर्तरि (पा.सू. २.२.१५) इति प्रतिबुद्धस्य याजकादिभ्यश्च इति प्रतिप्रसवात् समासः ।। ११ ।।

11. ನಿತ್ಯವಾದ ಜ್ಞಾನ-ಐಶ್ವರ್ಯ ಮೊದಲಾದ ಗುಣಸಂಪನ್ನನಾದ, ನಂದನೇ ಮೊದಲಾದ ಗೋಪರಿಂದ ಆರಾಧ್ಯನಾದ, ನಿರ್ವಿಕಾರನಾದ, ಬ್ರಹ್ಮ-ರುದ್ರಾದಿದೇವತೆಗಳ ಎಲ್ಲ ಕಾರ್ಯಗಳ ಪ್ರೇರಕನಾದ ನಿನಗೆ ನಮನಗಳು.

11. Oh Lord !! You are perfect the purest,in riches and knowledged always, at all pleces. You are the personification all that is the best and the noble qualities you are worshipped by Nanda and Gopas. You never change. You are the motivator of all deities like Brahma, Rudra. and others.

**जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ।**
**त्वं च स्वामी गुरुर्माता पिता च मम बान्धवः ।। १२ ।।**

**बान्धवः** बन्धुसमूहः बन्धुशब्दात्तस्य समूह इत्यण् ।। १२ ।।

12. ಹುಟ್ಟಿನಿಂದಲೂ ನಾನು ನಿನ್ನ ದಾಸನೂ-ಶಿಷ್ಯನೂ-ಪುತ್ರನೂ ಆಗಿರುವೆ. ನೀನೇ ನನ್ನ ತಾಯಿ-ತಂದೆ-ಗುರು-ಒಡೆಯ-ಬಂಧು ಎಲ್ಲವೂ ಆಗಿರುವಿ.

12. I am your servant, disciple and son always, right from my birth. You are in every way my father, mother, teacher, master and relative.

**अपि त्वां भगवन् ब्रह्मशिवशक्रमहर्षयः ।**
**द्रष्टुं यष्टुमभिष्टोतुमद्यापीश न हीशते ।। १३ ।।**

**अपि** इति । अपिशब्दो भिन्नक्रमः । हे **भगवन्** हे ईश ब्रह्मादयस्त्वां **द्रष्टुं** साक्षात्कर्तुं **यष्टुम्** अर्चितुम् **अभि** सर्वतः कल्पनेति यावत् ह्न स्तोतुमपि **नेशते**

न समर्थाः । हि शब्देन 'विष्णोर्नुकं वीर्याणि प्रवोचम्' इति श्रुतिप्रसिद्धिं दर्शयति ।। १३ ।।

13. ಓ ಪರಮಾತ್ಮನೇ ! ಬ್ರಹ್ಮ-ಶಿವ-ಇಂದ್ರ ಹಾಗೂ ಮಹರ್ಷಿಗಳು ನಿನ್ನನ್ನು ನೋಡಲು, ಪೂಜಿಸಲು, ನಿನ್ನ ವೈಭವವನ್ನು ಕೊಂಡಾಡಲು ಸಮರ್ಥರಲ್ಲ.

13. Oh Lord ! Even the great deities like Brahma, Rudra and Indra, the great seers are not capable of praising in prayer expressing all your virtues completely. They can not even praise even one virtue totally and can not worship you perfectly. They do according to their capacities only.

**तापत्रयमहाग्राहभीषणे भवसागरे ।**
**मज्जतां नाथ नौरेषा प्रणतिस्तु त्वदर्पिता ।। १४ ।।**

तापत्रयाण्येव **महाग्राहा** महानक्रास्तैर्भीषणैः **त्वदर्पिता** त्वयि समर्पिता **नौः** तरीः 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः ।। १४ ।।

14. ಆಧಿಭೌತಿಕ-ಆಧಿದೈವಿಕ-ಆಧ್ಯಾತ್ಮಿಕವೆಂಬ ಮೂರು ಬಗೆಯ ತಾಪಗಳೆಂಬ ಮೊಸಳೆಗಳ ಸೆಳೆತಕ್ಕೆ ಸಿಲುಕಿ ಸಂಸಾರಸಾಗರದಲ್ಲಿ ಮುಳುಗಿದವರಿಗೆ, ನಿನಗರ್ಪಿಸಿದ ಸಾಷ್ಟಾಂಗ ವಂದನೆಯು ನೌಕೆಯಂತಿದೆ.

14. Those who have been caught in the whirlpools of Adhi Bhautika, Adhidaivika and Adhyatma are dragged by crocodiles and are made to drown in the sea of troubles in life. You are like a save to pull them out to safety. I bow down to you in all humility and devotion.

**अनाथाय जगन्नाथ शरण्य शरणार्थिने ।**
**प्रसीद सीदते मह्यं मुह्यते भक्तवत्सल ।। १५ ।।**

**मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चनम् ।**
**तत्क्षन्तव्यं प्रपन्नानामपराधसहो ह्यसि ।। १६ ।।**

**शरण्य** शरणेषु साधो । तत्र साधुरिति यत् । सीदते शीर्यते मुह्यते अजानते सन्दिहानाय भ्रमते वा ।। १५ ।। १६ ।।

15. ಆಶ್ರಿತವತ್ಸಲನಾದ ವಿಶ್ವನಾಥನೇ ! ನನಗೆ ನಿನ್ನ ಅವಲಂಬನೆಯು ಅಗತ್ಯವಿದೆ. ಬೇರಾರೂ ನನಗೆ ರಕ್ಷಕರಿಲ್ಲ. ನಾನು ಬಳಲಿದ್ದೇನೆ. ಸಾಗಬೇಕಾದ ಮಾರ್ಗದ ಪರಿಚಯ ವಿಲ್ಲದ ನನ್ನ ಮೇಲೆ ಪ್ರಸನ್ನನಾಗು.

16. ಮಂತ್ರ ಶುದ್ಧಿ ತಂತ್ರಶುದ್ಧಿ ಇಲ್ಲದ ಭಕ್ತಿ ಇಲ್ಲದ ನನ್ನ ಪೂಜೆಯನ್ನು ಪ್ರಹಸನವನ್ನು ಕ್ಷಮಿಸು. ಶರಣಾಗತನಾದವನ ಅಪರಾಧವನ್ನು ಸಹಿಸುವವರಲ್ಲಿ ನೀನು ಅಗ್ರಗಣ್ಯ.

15. Oh Lord Viswanatha, giver of safe shelter, with love, I need you very much. It is a neccessity. I have none else to seek protection. I have no one else to depend on. I am completely tired and weak. I know not the right path. Shower mercy on me. Please be pleased!

16. The sanctity of mantra, the assigned way to the worship and devotion are both lacking in me, Everything looks like a farse, kindly excuse me.

**सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत ।**
**किङ्करोऽस्मि हृषीकेश भूयो भूयोऽस्मि किङ्करः ।। १७ ।।**

**सर्वावस्थासु** जाग्रत्स्वप्नसुषुप्तिमूर्च्छासु । मया अच्युत [1]अविश्लिष्ट । सर्वेति भिन्नं पदं वा । पूर्णेत्यर्थः । अनेनापि श्लेषे हेतुरुक्तो ज्ञेयः । अस्मीत्यहमर्थेऽव्ययम् इति वक्ष्यते । अतो न वैय्यर्थ्यशङ्का इति ज्ञेयम् ।। १७ ।।

17. ಎಲ್ಲ ದೇಶಕಾಲಗಳಲ್ಲಿ ಎಲ್ಲ ಅವಸ್ಥೆಗಳಲ್ಲಿ ನಾನು ನಿನಗೆ ದಾಸನಾಗಿದ್ದೇನೆ. ಮತ್ತೆ ಮತ್ತೆ ನಾನು ನಿನ್ನ ಕಿಂಕರನೆಂದು ವಿಜ್ಞಾಪಿಸಿಕೊಳ್ಳುತ್ತೇನೆ.

17. I am your servant always, at all places; at all stages I beg you repeatedly and request you to accept me as your humble servant.

---

१. अविश्लिष्य- मुद्रितपुस्तके

**एकत्रिचतुरत्यन्तचेष्टायेष्टकृते सदा ।**
**व्यक्तषाड्गुण्यतत्वाय चतुरात्मात्मने नमः ॥ १८ ॥**

**कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।**
**केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ॥ १९ ॥**

**॥ इति पञ्चरात्रागमे तृतीयोऽध्यायः ॥ ३ ॥**

**एक इति ॥** एकं च त्रीणि च चत्वारि च तैर्लक्ष्मीरूपैरत्यन्तं चेष्टा विलासो यस्य स तथोक्तः तस्मै । लक्ष्म्या एकं मूलरूपम् । श्रीभूदुर्गाख्यानि त्रीणि रूपाणि । भगवतो नितम्बारूढमुदराश्लिष्टमुरोनिलयं वामार्धरूपं च इति चत्वारि रूपाणि । तदुक्तम् -

**'जाम्बूनदाम्बरधरं नितम्बं चिन्त्यमीशितुः ।**
**स्वर्णमञ्जीरसंवीतमारूढं जगदम्बया'** इत्यादि ॥ १ ॥

अन्यत्रापि 'सा दक्षिणामानिनी देवता' इत्यादि ।

यद्वा त्रिभिः इतिहासपुराणपञ्चरात्रैः चतुर्भिःऋगादिभिः अत्यन्ता निर्णयमतिक्रान्ता । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः त्रिचतुरत्यन्ता एका अभिन्ना त्रिचतुरत्यन्ता चेष्टा यस्य स तथोक्तः तस्मै । चेष्टा या भगवदभेदेन पुंस्त्वज्ञापनाय पुंवद्भावः । एवमन्यत्रापि ॥ २ ॥

अथ वा एका च त्रयश्च चत्वारश्च एकत्रिचत्वारः लक्ष्मीदेवमानुषाः । लक्ष्म्याः पुंवच्छक्तिसूचनाय 'कूटस्थोऽक्षर उच्यते' (गी.१५.१६) इतिवत् पुल्लिङ्गत्वम् । तेषामत्यन्ता चेष्टा यस्मात् स तथोक्तः तस्मै । 'आदित्या वसवो रुद्रास्त्रिविधा हि सुरा यतः । मरुतश्चैव विश्वे च साध्याश्चैव च तद्गताः । अतस्त्रय इति प्रोक्ताश्चत्वारो मानुषाः स्मृताः' (७.४.१३) इति सप्तमतात्पर्योक्तेः । 'न ऋते त्वत्क्रियते किञ्चनारे' (ऋ.१०.११२.९) इति श्रुतेः ॥ ३ ॥

यद्वा त्रयो वा चत्वारो वा त्रिचतुराः एकस्याः द्रौपद्यास्त्रिचतुरेषु धर्मादिषु

एकस्यां द्रौपद्यां त्रिचतुराणां धर्मादीनामत्यन्ताः चेष्टाः शृङ्गारचेष्टाः क्रीडा वा यस्मात् स तथोक्तः तस्मै । तदुक्तम् । 'कृष्णस्तदाह नृपतिं प्रति देहि कन्यां सर्वेभ्य एव' (मा.ता.नि. १९.१५४) इति निर्णये । अश्विनोरेकत्वविवक्षाभ्यां त्रिचतुरेत्युक्तिः ज्ञेया । शकन्ध्वादिषूपसङ्ख्येयतया पररूपत्वम् । समासान्तविधेरनित्यत्वाद्वा न बहुव्रीहौ सङ्ख्येये डजबहुगणात् इति (पा.सू. ५.४.७३) डच् ।। ४ ।।

अथ वा एकस्यां द्रौपद्यां तिस्रः शचीशामलोषसः एकतिस्रः । तासां चतुर्षु धर्मादिषु वा तासु चतुर्णां धर्मादीनां वा अत्यन्ता चेष्टा यस्मात् स तथोक्तः तस्मै। तदुक्तम् । 'आवेशयुक्ता शच्यांश्च शामलायास्तथोषसः' (मा.ता.नि. १८-११५) इति ।। ५ ।।

यद्वा त्रिरावृत्तानि चत्वारि त्रिचत्वारि द्वादशेत्यर्थः । तेषु इन्द्रियेषु अत्यन्ताश्च ताश्चेष्टाश्च त्रिचतुरत्यन्तचेष्टाः । एकस्य मुख्यप्राणस्य त्रिचतुरत्यन्तचेष्टा यस्मात्स तथोक्तः तस्मै । 'द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् । द्रवतां हि इन्द्रियाणां हि नियन्ता प्राण एकराट्' (ब्र.सू.भा. २.४.१८) इति श्रुतेः । 'नभस्वतो हि सर्वाः स्युः चेष्टा भगवतो हरेः । किमुतान्यस्य जगतो यस्य चेष्टा नभस्वत' इति वचनात् ।। ६ ।।

अथवा एका च तिस्रश्च चतस्रश्च एकत्रिचतुरस्रश्च अष्टौ (अष्टा) इति यावत् । ता अत्यन्ताः सृष्ट्यादिचेष्टाः यस्मात् स तथोक्तः । तत एकशब्देन कर्मधारयः । 'तस्मै एतस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे' (ब्र.सू. भा.१.१.१) इति स्कान्दोक्तेः । एतेन सृष्ट्यादीनां भिन्नकर्तृकत्वमतं निरस्तम् इत्यलं पल्लवेन तदुक्तं 'जन्माद्यस्य यतः'(ब्र.सू.१.१.२) इति ।।७।।

यद्वा त्रयाणां नित्यानित्यनित्यानित्यभेदभिन्नानामचेतनानां चतस्रः अत्यन्ताः सृष्ट्यादिचेष्टा यस्मात् स तथोक्तः ।। ८ ।।

षाड्गुण्येन व्यक्तं व्यक्तषाड्गुण्यम् । पूर्वनिपातश्छान्दसः । तच्च तत्तत्त्वं

ब्रह्म च तस्मै ।। 'ब्रह्म वेदस्तपस्तत्वम्' इत्यभिधानात् । षाड्गुण्यनामा ग्रन्थविशेष इति प्रागुक्तम् । व्यक्तषाड्गुण्य इति भिन्नं पदं वा । चत्वारात्मनः श्रीभूदुर्गाह्रीनामानि मायाजयाकृतिशान्तिनामानि वा रूपाणि यस्य स तथोक्तः । लक्ष्म्याः 'कूटस्थोऽक्षर उच्यते' इत्यादिवत् पुल्लिङ्गत्वं ज्ञेयम् । तस्या आत्मा बुद्धिः यस्मात् स तथोक्तः तस्मै । 'संस्तभ्यात्मानमात्मना' (गी.३.४३) इत्यत्र आत्मना बुध्येति व्याख्यानात् । तदुक्तम् ह्न 'यस्माद्ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपि च । ज्ञानस्फूर्तिः सदा तस्मै हरये गुरवे नमः' इति तस्मिन्नात्मा यस्य स आत्मनि यस्य इति वा । तदुक्तम् ह्न 'सा दक्षिणामानिनी देवता च' (मा.तानि. २०-७४) इत्यादि ।। १८ ।। १९ ।।

*।। इति श्रीमदार्यानन्ताचार्यपूज्यपादाराधकेन तत्तनुजेन*
*बालशर्मणा विरचितायां*
*जितन्तेस्तोत्रविवृतौ वैजयन्त्यां तृतीयोऽध्यायः ।। ३ ।।*

18. ಲಕ್ಷ್ಮೀದೇವಿಯೊಂದಿಗೆ, ಶ್ರೀ-ಭೂ-ದುರ್ಗಾ ಎಂಬ ಮೂರು ರೂಪಗಳೊಂದಿಗೆ, ತೊಡೆಯ ಮೇಲೆ ಕುಳಿತ, ಸೊಂಟವನ್ನು ಬಳಸಿದ, ಎದೆಯಲ್ಲಿ ಆಸರೆ ಪಡೆದ, ಅರ್ಧನರನಾರೀರೂಪದಲ್ಲಿರುವ (ಹರಿಯ ಎಡಭಾಗದ ಅರ್ಧವಾಗಿರುವ,) ಹೀಗೆ ನಾಲ್ಕು ರೂಪಗಳಿರುವ ಸಿರಿದೇವಿಯೊಂದಿಗೆ ವಿಹರಿಸುವ, ಭಕ್ತರ ಇಷ್ಟಾರ್ಥಗಳನ್ನು ನೆರವೇರಿಸುವ, ಷಾಡ್ಗುಣ್ಯಗ್ರಂಥದಿಂದ ಚೆನ್ನಾಗಿ ವ್ಯಕ್ತನಾಗುವ, ಚತೂರೂಪಿಯಾದ ಹರಿಗೆ ನಮನಗಳು.

19. ಮನೋವಾಕ್‌ಕಾಯಗಳಿಂದ ನಾನು ನಡೆಸುವ ಎಲ್ಲ ಕಾರ್ಯಗಳೂ ಜನ್ಮ ಜನ್ಮಾಂತರದಲ್ಲಿ ನಿನ್ನ ಪೂಜೆಯಾಗಲಿ.

18. Oh Lord ! Along with Lakshmi with her three forms Sri-Bhu-Durga sit on your lap, embracing your waist, you show yourself in half-man half-woman form of Ardhanaranaareswara. You grant the desires of your devotees to the extent they deserve. You are very well described.

19. Let all, Whatever I perform in thought, in words and actions in this life, life after life, when I take birth, shall be at your service and will be your worship.

## ।। अथ चतुर्थोऽध्यायः ।।

**ब्रह्मोवाच -**

**जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।**
**नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ।। १ ।।**

**विश्वः** पूर्ण इति **भावना** मतिर्यस्य स तथोक्तः तत्सम्बुद्धिः ।। 'तदात्मानमेवावेत् अहं ब्रह्मास्मि' इति श्रुतेः ।। १ ।।

1. ಕಮಲದಂತೆ ಕಂಗಳುಳ್ಳವನೇ, ಪೂರ್ಣತೆಯ ಅರಿವುಳ್ಳವನೇ ವಿಶ್ವವಿಜಯಿಯಾದ ನಿನಗೆ ನಮನಗಳು. ಸೃಷ್ಟಿಯ ಆರಂಭದಲ್ಲಿದ್ದ ಸರ್ವೋತ್ತಮನೇ, ಇಂದ್ರಿಯಗಣ ಪ್ರೇರಕನೇ, ನಿನಗೆ ನಮನಗಳು.

1. Oh Lotus-eyed Lord, the supreme, knowledge incarnate, omniscient, the only conqueror of all the universe, always, even at the time of creation of the universe, the motivator of all senses, to you, I bow down prostrating with all humility and devotion, again and again.

**देवानां दानवानां च सामान्यमधिदैवतम् ।**
**सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ।। २ ।।**

ननु विषमो हरिः कथं प्रार्थनया प्रसीदति इत्याशङ्कां सामोक्त्या परिहरन् तं शरणं व्रजति - **देवानाम्** इति ।। अत एव अधिकं च तद्दैवतं च देवता च तत्सर्वोत्तममित्यर्थः । वैषम्यादिदोषदुष्टस्य सर्वोत्तमत्वासम्भवात् इति हृदयम्। तदाह सूत्रे - 'वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति' (ब्र.सू.२.१.३५) इति । यद्वा अधिदैवतम् इति विभक्त्यर्थे अव्ययीभावः । अधिदैवतं दैवते तादर्थ्ये सप्तमी । देवतार्थं शरणं व्रजामि इति अन्वयः । 'एकान्तानां न कस्यचित् । अर्थे नारायणो देवः सर्वमन्यत् तदर्थकम्' इति वचनात् 'वृन्दारका दैवतानि' इत्यमरः ।। २ ।।

2. ದೇವ-ದಾನವರ ಯೋಗ್ಯತೆಗೆ ತಕ್ಕಂತೆ ಪ್ರೇರಿಸುವ ಸರ್ವೋತ್ತಮನೇ ! ನಿನ್ನ ಪಾದಕಮಲಗಳಿಗೆ ಶರಣಾಗಿದ್ದೇನೆ.

2. The motivator of all deities and demons according to their in-built nature, you are the Lord Supreme, to you I bow down to your lotus-like feet with all humility and devotion again and again.

**पिता त्वमसि लोकस्य स्रष्टा संहारकस्तथा ।**
**अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ॥ ३ ॥**

**अध्यक्षः** अक्षाणीन्द्रियाण्यधिकृत्य विद्यमानः । 'यः चक्षुषि तिष्ठन्' इत्यादिश्रुतेः । **अध्यक्षः** । जीवानां जाग्रदाद्यवस्थानां द्रष्टा वा 'जाग्रदादेः परो द्रष्टा स तु नित्यो हरिः स्मृतः' इति वचनात् । न केवलं द्रष्टैव । किन्तु तासां प्रेरकश्च इत्याह ह्न **अनुमन्ता** इति । अनुमन्ता प्रेरकः । तर्हि स कुतो न दृश्यत इत्यत आहह्न **गुणमाया** इति ॥ गुणशब्दोऽभिमान्यधिकरणन्यायेन गुणाभिमानिपरः । स चासौ माया दुर्गा च तया जीवगतया समावृतः प्रतिबद्धः । अतो न दृश्यत इति भावः । तदुक्तम् ह्न 'दैवी ह्येषा गुणमयी' (गी.७.१४) इति । तत्र गीतातात्पर्ये - 'लक्ष्म्या वशमया लोका विष्णुनैव विमोहिताः । ये तु विष्णुं प्रपद्यन्ते मायामेतां तरन्ति ते ॥' (गी.ता.७.१३) इति ॥ ३ ॥

3. ನೀನು ಈ ವಿಶ್ವದ ಜನಕ-ಪಾಲಕ-ಸಂಹಾರಕನೂ ಅಹುದು. ಇಂದ್ರಿಯಗಳ ಒಳಗಿದ್ದು ಪ್ರೇರಕನೂ ಆಗಿರುವೆ. ಜೀವರಲ್ಲಿರುವ ತಮೋಗುಣನಿಯಾಮಕಳಾದ ದುರ್ಗೆಯ ಅನುಗ್ರಹವಿಲ್ಲದೇ ನಿನ್ನ ದರ್ಶನ ಸಾಧ್ಯವಾಗದು.

3. Truly you are the creator, sustainer, and the destroyer of the universe. Being present in all the sensory organs, you motivate, commanding the presiding deities. Without the kind grace of the presiding deity of Tamas. Durga, we can not have your glimpse.

**संसारसागरं घोरमनन्तक्लेशभाजनम् ।**
**त्वामेव शरणं प्राप्य निस्तरन्ति मनस्विनः ॥ ४ ॥**

**मनस्विनः** । ज्ञानिनः । अतोऽहमपि शरणं व्रजामि इति भावः ।। ४ ।।

4. ಲೆಕ್ಕವಿಲ್ಲದ ಸಂಕಟ-ದುಃಖಗಳ ತಾಣವಾದ ಭಯಂಕರವಾದ ಸಂಸಾರಸಾಗರವನ್ನು ಜ್ಞಾನಿಗಳು ನಿನಗೆ ಶರಣಾಗತರಾಗಿ ದಾಟುವರು.

4. The knowledgeable wise souls surrender to you totally to cross the countless problems.

**न ते रूपं न चाकारो नायुधानि न चास्पदम् ।**
**तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ।। ५ ।।**

ननु 'अवर्णम् अशरीरम्' इत्यादिश्रुते रूपदेहादिविधुरस्य भगवतः कथमपरोक्षज्ञानम् इत्याशयेन शङ्कते **न** इति । यद्यपि इति शेषः । **नायुधानीत्यादि** । गृहीतुरवयवविशेषस्याधेयस्य देहस्य चाभावात् इति भावः। प्राकृतरूपाद्यभावमुक्तश्रुत्यर्थमभिप्रेत्य अप्राकृतपूर्णषड्गुणविग्रहो भक्तप्रत्यक्षप्रमित इति तदपरोक्षज्ञानं युक्तम् इत्याशयेन समाधत्ते ह **तथापि इति** ।। पुरुषाकारः पूर्णषाड्गुण्यविग्रहः । **प्रकाश** इति । प्रकृष्टे वायौ काशसे भासीत्यर्थः । 'तस्यैष आत्मा विशते ब्रह्मधाम' (आथ.४.४) इति श्रुतेः । 'प्रधानं नाम विष्णोऽस्तु प्राण एव प्रकीर्तितः' (आथर्व.भा.४.१.१) इत्याद्याथर्वणभाष्योक्तेश्च । आयुधानि तु चक्रशङ्खादीनि प्रसिद्धानि इति न उक्तानि इति ज्ञेयम् ।। ५ ।।

5. ನಿನಗೆ ಭೌತಿಕವಾದ ಶರೀರವಾಗಲೀ, ಬಣ್ಣವಾಗಲೀ, ಆಯುಧಗಳಾಗಲೀ ಇರುವುದಿಲ್ಲ. ಆದರೂ ಅಪ್ರಾಕೃತವಾದ ಮಂಗಲಶರೀರವನ್ನು ಹೊತ್ತ ನೀನು ಭಕ್ತರಿಗೆ ಕರುಣೆಯಿಂದ ದರ್ಶನ ನೀಡುವಿ.

5. You do not have physical body as we have. You are totally different. Neither you have colour, body nor weapons the like of which we have seen. Your attributes are your body. With it you kindly give a glimpse of your presence.

**नैव किञ्चित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् ।**
**नैव किञ्चिदसिद्धं ते न च सिद्धोऽसि कस्यचित् ।। ६ ।।**

मनस्विनो यं शरणं प्राप्य दुस्तरं संसारं निस्तरन्तीत्युक्तम् । तत्स्वरूपं सप्रमाणकमाह **न** इत्यादिद्वाभ्याम् -

न कस्यचित्प्रत्यक्षोऽसि इति । स्वप्रसादं विना इति योज्यम् । 'नित्याव्यक्तोऽपि भगवानीक्षते निजशक्तितः । तमृते परमात्मानं कः पश्येतामृतं प्रभुम्' इति स्मृतेः । तदाह सूत्रे ह्न 'अतोऽनन्तेन तथाहि लिङ्गम्' (ब्र.सू. ३.२.२७) इति । 'नैव किञ्चित्परोक्षम्' इत्यनेन प्राप्तं मन्दानां ज्ञानाभावभ्रमं निराह ह्न **नैव** इति । किञ्चिदप्यसिद्धमनिश्चितं न किन्तु सर्वमप्यपरोक्षम् इत्यर्थः । 'साक्षी चेता' (श्वेता. उ.६.११) इति श्रुतेः । **ते** इति शेषे षष्ठी (पा.सू. २.३.५०) तृतीयार्थे । एवमुत्तरत्रापि । 'न सिद्धः' साकल्येनाज्ञातः । यद्वा ते तव किञ्चिदप्यसिद्धमनिष्टं न । त्वं तु कस्यचित् कस्यापि सिद्धः साक्षादिष्टो नासि । किन्तु कस्यचित् कस्य ब्रह्मण एव साक्षादिष्टोऽसि इत्यर्थः तदुक्तं 'नारायणस्तु मोक्षार्थो मोक्षो नान्यर्थ इष्यते । एवं मध्यमभक्तानाम् एकान्तानां न कस्यचित्' । अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम् ।' इति । मतिबुद्धिपूजार्थेभ्यश्च (पा.सू. ३.२.१८८) इत्यत्र मतिरिहेच्छेति वैय्याकरणोक्तेः । तत्रापि मतिशब्दपर्यायस्य सिद्धिशब्दस्य इच्छार्थत्वं बोध्यम् । एतेन सर्वविषयकापरोक्षवत् [१]स्वप्रसादमंन्तरेणाज्ञेयम् [२]एकान्तभक्तेतरेषां मोक्षरूपेष्टसाधनतयेष्टम् । एकान्तिनां साक्षादिष्टं च [३]तव स्वरूपम् इत्युक्तं भवति ।। ६ ।।

6. ನಿನಗೆ ಕಾಣದಿರುವುದು ಯಾವುದೂ ಇಲ್ಲ. ನಿನ್ನ ಅನುಗ್ರಹವಿಲ್ಲದೇ ನಿನ್ನ ದರ್ಶನ ಯಾರಿಗೂ ಸಾಧ್ಯವಿಲ್ಲ. ನಿನಗೆ ಅಸಾಧ್ಯವಾದುದು ಯಾವುದೂ ಇಲ್ಲ. ಯಾರೂ ನಿನ್ನನ್ನು ಪೂರ್ಣವಾಗಿ ಅರಿಯಲಾರರು.

6. You see all. Nothing can be out of your sight. Without your kind grace none can see you. For you everything is possible. For you, nothing is impossible. None can know you totally.

---

१. स्वप्रसादमन्तरेण ज्ञेयम्- मुद्रितपुस्तके

२. एकान्तभक्तेन एषां मोक्षरूपेष्टसाधनत इष्टम्-मुद्रितपुस्तके । ३. नव

**कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ।**
**योगानां परमां सिद्धिं परमं ते पदं विदुः ॥ ७ ॥**

**वचसां** वैदिकवचसामुत्तमं वाच्यम् । तदपेक्षयान्यान्यमुख्यानि । कुत एतत् **योगानां** योगवृत्तीनां **परमां सिद्धिम्** । सिध्यन्त्यस्मिन् इति सिद्धिः इन्द्रादयस्त्वपरसिद्धयः एतदपि कुतः ? **कार्याणां** महदादीनां **पूर्वं** मुख्यं **कारणम्** । प्रकृत्यादीनि तु अमुख्यकारणानि । **पदं** स्वरूपं तस्मात्परमं विदुः । यद्यपि रूढिरविलम्बेनार्थप्रत्यायनामात्रेण बलवती । तथापि विषयज्ञानहेतुत्वाद् योग एव बलीयान् इति मत्वा स एव गृहीतः । एतेन परममुख्यवृत्या सर्वशब्दवाच्यं तव स्वरूपम् इत्युक्तं भवति ॥ ७ ॥

7. ಮಹತ್ತತ್ತ್ವಾದಿ ವಸ್ತುಗಳ ಉತ್ಪತ್ತಿಗೆ ನೀನು ಮೂಲ ಕಾರಣ. ಪ್ರಕೃತಿಯು ಅಪ್ರಧಾನ ಕಾರಣವೆನಿಸಿದೆ. ಎಲ್ಲ ವೈದಿಕವಚನಗಳಿಂದ ನೀನು ಮುಖ್ಯ ವೃತ್ತಿಯಿಂದ ಪ್ರತಿಪಾದ್ಯನಾಗಿರುವಿ.

7. You are the main cause of Mahattatwa and other tatwas. Nature has been the secondary cause. All words of scriptures only describe you primarily but not completely.

**अहं भीतोऽस्मि देवेश संसारेऽस्मिन् भयावहे ।**
**पाहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥ ८ ॥**

**परम्** अन्यत् । **शरणं** रक्षितारम् । 'शरणं गृहरक्षित्रोः' इत्यमरः ॥ ८ ॥

8. ಭಯಂಕರವಾದ ಸಂಸಾರದಲ್ಲಿ ನಾನು ಭೀತನಾಗಿರುವೆ. ಹೇ ಕಮಲ ನಯನ ! ನೀನಲ್ಲದೇ ಬೇರಾರೂ ನನಗೆ ರಕ್ಷಕರಿಲ್ಲ. ನನ್ನನ್ನು ಕಾಪಿಡು.

8. I am scared of terrible cycle of life and death. Oh Lotus-eyed Lord, protect me. There is none other than you to protect me always.

**कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ।**
**शरीरे च गतौ चास्य वर्तते मे महद्भयम् ॥ ९ ॥**

**त्वत्पादकमलादन्यन्नमे जन्मान्तरेष्वपि ।**
**निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ।। १० ।।**

**शरीरे** च इत्यत्र चः समुच्चये । अन्यो हेत्वर्थे । अस्य जीवस्य शरीरे **गतौ** स्वर्गादि लोकयात्रायां स्वर्गादौ वा व्याधिगर्भवासार्वागागमनादि महद्भयं वर्तते । तस्मात् **पाहि** इति पूर्वेणान्वयः । **कुशलस्य** मोक्षस्य ।। **सद्गतिं** मोक्षं प्रति येन निमित्तान्तरेण **गच्छामि** व्यत्ययेन गच्छेयम् इत्यर्थः । अतो हेतोः **पाहि** इति पूर्वेण सम्बन्धः ।। ९-१० ।।

9. ಎಲ್ಲ ಕಾಲಗಳಲ್ಲೂ, ಎಲ್ಲ ಪ್ರದೇಶಗಳಲ್ಲೂ, ಅನೇಕರೋಗಗಳ ತಾಣವಾದ ಈ ಭೌತಿಕ ಶರೀರ, ಗರ್ಭವಾಸ-ನರಕಾದಿ ದುಃಖಗಳ ಬಗ್ಗೆ ನಾನು ಭಯಭೀತನಾಗಿದ್ದೇನೆ.

10. ಮುಕ್ತಿ ಮಾರ್ಗದಲ್ಲಿ ಸಾಗಲು ನಿನ್ನ ಪಾದ ಕಮಲಗಳ ಶರಣಾಗತಿಯೊಂದನ್ನು ಹೊರತುಪಡಿಸಿ, ಜನ್ಮ, ಜನ್ಮಗಳಲ್ಲೂ ನನಗೆ ಬೇರೊಂದು ಉಪಾಯವಿಲ್ಲ.

9. I am horribly scared of this life. This body is the storehouse of all diseases, stayning in the womb again and again is a hell.

10. There is way to proceed in the path of liberation by surrendering at your lotus-feet in life,in life after life. There is no other way.

**विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमूर्जितम् ।**
**जन्मान्तरेऽपि मे देव माभूदस्य परिक्षयः ।। ११ ।।**

**विज्ञानम्** इति । यत् येन गुरुणा तदुपदेशेन इति यावत् । **प्राप्तं** लब्धं **यदिदं** प्रसिद्धं **ज्ञानम्** इदं **विज्ञानं** च । **अस्य** अनयोः अन्ततो विषयैक्यादेकवचनम् । अनयोः ज्ञानविज्ञानयोः **परिक्षयो माभूत्** न भवेत् । 'भवतेः माङि लुङ्' (पा. ३.३.१७५) इति लुङ् । गातिस्थेति (पा. १.४.६०) सिचोलुक् 'न माङ्योगे' (पा. ६.४.७४) इति अडभावः ।

ज्ञानविज्ञानशब्दार्थौ तु ह्व 'विष्णोराधिक्यसंवित्तिः सर्वस्मात् ज्ञानमुच्यते ।

एवं विविच्यत ज्ञानं विज्ञानमिति कीर्तितम्' इति गीतातात्पर्योदाहृतस्मृत्या ज्ञेयौ । विशेषः तत्रैव द्रष्टव्यः ।। ११ ।।

11.ದಯಾಲುವಾದ ನಿನ್ನ ಉಪದೇಶದಿಂದ ನಾನು ಪಡೆದ ಜ್ಞಾನ ಮತ್ತು ವಿಶೇಷ ಜ್ಞಾನಗಳು ಯಾವ ಜನ್ಮದಲ್ಲೂ ವಿನಾಶಹೊಂದದೇ ಜಾಗೃತವಾಗಿರಲಿ.

11. Oh Lord,whatever the knowledge,including the special knowledge, obtained by your kind grace, let them be intact and be ever awake, in this life and in the lives that follow.

**दुर्गतावपि जातायां त्वद्गतो मे मनोरथः ।**
**यदि नाशं न विन्देत तावताऽस्मि कृती सदा ।। १२ ।।**

**दुर्गतौ** नरके **मनोरथः** इच्छा । 'स्यान्नारकस्तु नरको निरयो दुर्गतिस्त्रियाम् । इच्छा काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः' इति चामरः स्यात् स इति च शेषः । तावता त्वद्गतमनोरथस्यानाशमात्रेण कृती मुक्तः अस्मि नत्वन्या मुक्तिरपेक्षिता इति भावः ।। १२ ।।[१]वर्तमानसामीप्ये वर्तमानवदिति लट् ।

12. ಪ್ರಾರಬ್ಧಕರ್ಮದಿಂದ ಯಾವುದೇ ಶರೀರದಲ್ಲಿರಲಿ ಅಥವಾ ನರಕಾದಿ ಲೋಕ ದಲ್ಲಿರಲಿ ನನ್ನ ಮನಸ್ಸು ನಿರಂತರ ನಿನ್ನ ಮಹಿಮೆಯ ಅನುಸಂಧಾನದಲ್ಲಿ ಸ್ಥಿರವಾಗಿರಲಿ. ಇಷ್ಟರಿಂದ ನಾನು ಕೃತಾರ್ಥ.

12. In whatever living body I stay, because of prarabdha bondage or even in places like hell,let my mind ever think of your glorious attributes firmly. Thus let my life be worthy of it.

**न कामकलुषं चित्तं मम ते पादयोः स्थितम् ।**
**कामये वैष्णवत्वं च सर्वजन्मसु केवलम् ।। १३ ।।**
**अज्ञानादथवा ज्ञानादशुभं यत्कृतं मया ।**
**क्षन्तुमर्हसि देवेश दास्येन च गृहाण माम् ।। १४ ।।**

न स्थितम् इत्यन्वयः ।। **वैष्णवत्वं** विष्णुभक्तत्वम् ।। १३-१४ ।।

१. इदं वाक्यं मुद्रितपुस्तके नास्ति ।

13. ಕಾಮನೆಗಳಲ್ಲಿ ಸಿಲುಕಿದ ನನ್ನ ಮನಸ್ಸು ನಿನ್ನ ಪಾದಗಳಲ್ಲಿ ಸ್ಥಿರವಾಗಿ ನಿಲ್ಲದು. ಎಲ್ಲ ಜನ್ಮಗಳಲ್ಲೂ ನಿನ್ನಲ್ಲಿ ಭಕ್ತಿ ಸ್ಥಿರವಾಗಿರಲಿ.

14. ಬುದ್ಧಿ ಪೂರ್ವಕವಾಗಿಯಾಗಲೀ ಅಥವಾ ಅಬುದ್ಧಿಪೂರ್ವಕವಾಗಿಯಾಗಲೀ ನಾನು ಮಾಡಿದ ಪಾಪಗಳನ್ನು ನೀನು ಕ್ಷಮಿಸು. ನನ್ನನ್ನು ದಾಸನನ್ನಾಗಿ ಸ್ವೀಕರಿಸು.

13. The mind surrounded by desires of wants does not allow me to fix my mind at your feet. In my every birth let my mind be fixed at your feet firmly.

14. Forgive all my sins,which I have committed knowingly or unknowingly. Accept me as your humble servant.

**सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत ।**
**किङ्करोऽस्मि हृषीकेश भूयो भूयोऽस्मि किङ्करः ।। १५ ।।**

अस्मीत्यहमर्थे अव्ययम् । 'वसूनां पावकश्चास्मि' (गी. १०.२३) इति गीताविवृतौ तथोक्तेः । 'दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये । उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रैः यत् स्विद्यते तव पदं ननु सा व्यथा मे' इति प्रयोगाच्च । 'भूयो भूयो नमोऽस्तु ते' इत्यपि क्वचित् इति आहुः ।। १५ ।।

15. ಎಲ್ಲ ದೇಶ-ಕಾಲಗಳಲ್ಲಿ ಎಚ್ಚರ-ಕನಸು-ನಿದ್ರೆ ಜೀವನ್ಮುಕ್ತ್ಯವಸ್ಥೆ ಮತ್ತು ಮುಕ್ತಿಯಲ್ಲೂ ನಾನು ನಿನ್ನ ದಾಸನಾಗಿರುವೆ. ಓ ಹೃಷೀಕೇಶನೇ! ನಾನು ದಾಸನೆಂಬುದಾಗಿ ಮತ್ತೆ ಮತ್ತೆ ನಿವೇದಿಸುವೆ.

15. Oh the master of all senses ! at all place, at all stages, always, be it in awakeness,in sleep and slumber, in dream, on the way to liberation,and even in liberation, I shall be your humble servant.

**इत्येवं मनसा स्तुत्या स्तुत्वा देवं दिने दिने ।**
**किङ्करोऽस्मीति चात्मानं देवायैवं निवेदयेत् ।। १६ ।।**

**न जाने कर्म यत्किञ्चिन्नापि लौकिकवैदिके ।**
**न निषेधविधी विष्णो तव दासोऽस्मि केवलम् ।। १७ ।।**

**स त्वं प्रसीद भगवन् कुरुमय्यनाथे**
**विष्णो कृपां परमकारुणिकः किल त्वम् ।।**
**संसारसागरनिमग्नमनन्तदीन-**
**मुद्धर्तुमर्हसि हरे करुणावशेन ।। १८ ।।**

**कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।**
**केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ।। १९ ।।**

**।। इति श्रीपञ्चरात्रागमे चतुर्थोऽध्यायः ।। ४ ।।**

इति **मनसा** एवमुक्तप्रकारया **स्तुत्या देवं** स्तुत्वेत्यनेन मनः पूर्वकमेव स्तुत्यादीत्युक्तं भवति ।देवायैव न तु सोपपदाय महादेवाय तस्यामुख्यत्वात् । 'मुख्यस्य निर्विशेषण शब्दोऽन्येषां विशेषतः इति वचनात्' (ब्र.सू.भा. १.१.१ उदाहृत स्कान्दवचनम्) इति भावः ।आत्मनिवेदनं च अनाद्यनन्तकालेषु मयि विष्णुः स्थित्वा सर्वत्र मां प्रेरयति इति प्रीतिपूर्वकज्ञानरूपमात्मसमर्पणमेव ज्ञेयम् । 'अनाद्यनन्तकालेषु मुक्तौ संसार एव च ।मयिस्थश्चोदयत्येको विष्णुर्मां सर्वदैव तु । इति सप्रीतिकं ज्ञानं विद्यादात्मसमर्पणम्' (भाग.ता. ७.११.११ उदाहृततन्त्रमाला वचनम्) इति सप्तमतात्पर्योक्तेः । प्रागुक्तं दास्यं तु प्रतिमादिसन्निहितभगवद्दासत्वज्ञानम् इति बोध्यम् । 'बहिश्चेश्वरदासत्वं दास्यमित्युच्यते बुधैः' (भाग.ता. ७.११.११ ) इति सप्तमतात्पर्योक्तेः। अथवा नियन्तृत्वेनात्मनि मयि स्थितो भगवान् इति नितरां वेदनं ज्ञानमात्मनिवेदनम्। 'मुक्तस्यापि ममान्तस्थो नियन्तैव हरिः सदा इति ज्ञानं समुद्दिष्टं सम्यगात्म-निवेदनम्' इति सप्तमतात्पर्योक्तेः ।। १६-१९ ।।

*।। इति श्रीमदार्यानन्ताचार्यपूज्यपादाराधकेन तत्तनुजेन बालशर्मणा विरचितायां जितन्तेस्तोत्रविवृतौ वैजयन्त्यां चतुर्थोऽध्यायः ।। ४ ।।*

16. ಹೀಗೆ ಮನಃಪೂರ್ವಕವಾಗಿ ಈ ಸ್ತೋತ್ರದಿಂದ ಶ್ರೀಹರಿಯ ಮಹಿಮೆಯನ್ನು ಕೊಂಡಾಡಿ, ಪ್ರತಿದಿನವೂ ನಾನು ನಿನ್ನ ಸೇವಕನೆಂದು ಪೂಜಾವಸಾನ ಕಾಲದಲ್ಲಿ ಪ್ರಾರ್ಥಿಸಬೇಕು. ಸರ್ವಸ್ವವನ್ನೂ ದೇವರಿಗೆ ಅರ್ಪಿಸಬೇಕು.

17. ಲೌಕಿಕ ಅಥವಾ ವೈದಿಕಕರ್ಮಗಳ ಅನುಷ್ಠಾನದ ಅರಿವು ಎನಗಿಲ್ಲ. ವಿಧಿ ನಿಷೇಧ (ಕರ್ತವ್ಯ ಮತ್ತು ತ್ಯಾಜ್ಯ)ಗಳ ಬಗ್ಗೆ ನನಗೇನೂ ತಿಳಿಯದು. ನಾನು ಸದಾ ನಿನ್ನ ದಾಸನೆಂದು ಮಾತ್ರವೇ ತಿಳಿದಿರುವೆ (ನಿನಗೆ ಅರ್ಪಿಸಿಕೊಂಡಿರುವೆ)

18. ಷಡ್ಗುಣೈಶ್ವರ್ಯಪೂರ್ಣನಾದ ಶ್ರೀಹರೇ ! ನನಗೆ ರಕ್ಷಕರಾರೂ ಇಲ್ಲ. ಸ್ವಾಭಾವಿಕವಾಗಿ ನೀನು ದಯಾಳುವಲ್ಲವೇ ? ಸಂಸಾರಸಾಗರದಲ್ಲಿ ಮುಳುಗಿರುವ ಅನಂತ ದುಃಖಗಳಿಂದ ಬೆಂದು ಬಸವಳಿದ, ನನ್ನನ್ನು ಕೇವಲ ಕರುಣೆಯಿಂದ ನೀನು ಉದ್ಧರಿಸು.

19. ಕಾಯ-ವಾಕ್-ಮನಸ್ಸುಗಳಿಂದ ನಾನು ನಡೆಸುವ ಎಲ್ಲ ಕಾರ್ಯಗಳು ಎಲ್ಲ ಜನ್ಮಗಳಲ್ಲೂ, ಎಲ್ಲ ಕಾಲದಲ್ಲೂ ನಿನ್ನ ಆರಾಧನಾರೂಪವಾಗಿರಲಿ .

16. Thus,one should in all sincerity, heartily pray Sri Hari reciting this stotra while worshipping, praising the glory of his attributes always and at the end of life as a swan song dedicating everything.

17. I know not the spiritiualist life in its true sense. My knowledge and involvement of very poor. Neither I know the injuction nor the forbidden law prescribed by the scriptures. All I know is that I am your humble servant and having that in mind I have submitted and surrendered myself to you at your feet

18. Oh Lord Sri Hari ! richest, comprising all encompassing six attributes.I have no one to protect me. Is it not that your nature to be kind to helpless.Save me and protect me I am tired and fagged out in this world, by being crushed down by countless troubles.

19. Whatever I think,I speak and act , let all be in your service and be your worship.

## ।। अथ पञ्चमोऽध्यायः ।।

**ब्रह्मोवाच -**

**जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।**
**नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ।। १ ।।**

**[१]नमस्ते वासुदेवाय शान्तानन्दचिदात्मने ।**
**अध्यक्षाय स्वतन्त्राय निरपेक्षाय शाश्वते ।। २ ।।**

सर्वेभ्यो देवेभ्यो विशिष्टः श्वा वायुः । वि श्वा इति भावना ज्ञानं यस्य प्रियतया स तथोक्तः तत्सम्बुद्धिः विश्वभावन । 'श्वा वै वायुः श्वसनात्' इति ऋग्भाष्योक्तेः । 'सर्वदेवोत्तमो वायुः' इति ज्ञानं न चापरम् । प्रियम् अस्ति हरेः किञ्चित् तथा वायोहरिर्विदः' (भा.ता. ११.१२.४४) इत्येकादश-तात्पर्योक्तेः ।। १ ।। २ ।।

1. ಮುಖ್ಯಪ್ರಾಣನು ಜೀವೋತ್ತಮ(ಶ್ರೇಷ್ಠ)ನೆಂಬ ಉಪಾಸಕರಿಗೆ ಒಲಿಯುವ, ಇಂದ್ರಿಯ ನಿಯಾಮಕನೂ ಕಮಲಾಕ್ಷನೂ, ಬ್ರಹ್ಮದೇವರಿಗೆ ಜನ್ಮದಾತನೂ ಆದ ವಿಶ್ವ ವಿಜಯಿಯಾದ ನಿನಗೆ ನಮಸ್ಕಾರಗಳು.

2. ಎಲ್ಲ ವಿಶ್ವವನ್ನು ಪ್ರತ್ಯಕ್ಷವಾಗಿ ನೋಡುವವನೂ ,ಸ್ವತಂತ್ರನೂ, ಪೂರ್ಣನೂ, ನಿರ್ವಿಕಾರನೂ, ಜ್ಞಾನಾನಂದ ಸ್ವರೂಪನಾಗಿ ವಿಶ್ವದಲ್ಲಿ ವ್ಯಾಪ್ತನೂ ಆದ ನಿನಗೆ ನಮಸ್ಕಾರಗಳು.

1. Oh Lotus-eyed Lord ! Accepting the devotion,worship and service of Mukhyaprana, you have bestowed on him jeevottamatva.You have given birth to Brahmadeva.You have been the winner everywhere always.To you I bow down prostrating with all devotion and humility

2. Oh Lord ! You see directly everything in the Universe always.You are totally independent you are complete You can

१. ख. कोशे अयं श्लोकः नास्ति ।

not be changed nor you change yourself. You do not undergo any change. You are all pervading. You are the very incarnation of real knowledge. You are the winner always everywhere.

**अजिताय नमस्तुभ्यं षाड्गुण्यनिधये नमः ।**
**महाविभूतिसंस्थाय नमस्ते [१]चतुरात्मने ॥ ३ ॥**

न जितो अजितः केनाप्यपराजितस्तस्मै । महाविभूतिर्महैश्वर्यं तया संस्था स्थितिर्यस्येति वा । महती देशकालव्याप्ता च सा ब्रह्मादिभ्यो विशिष्टा च सा भूतिर्लक्ष्मीश्च तस्यां संस्था स्थितिर्यस्य तस्मादिति वा । लक्ष्म्या दक्षिणानामकत्वात् इति भावः ॥ ३ ॥

3. ಮಹಾಲಕುವಿದೇವಿಯಲ್ಲಿ ಸನ್ನಿಹಿತನಾದ, ಯಾರಿಂದಲೂ ಗೆಲ್ಲಲಾಗದ ಷಡ್ಗುಣೈಶ್ವರ್ಯ ಸಂಪನ್ನನಾದ, ವಾಸುದೇವಾದಿ ಚತೂರೂಪಿಯಾದ (ವಾಸುದೇವ-ಸಂಕರ್ಷಣ-ಪ್ರದ್ಯುಮ್ನ-ಅನಿರುದ್ಧರೂಪಗಳನ್ನು ಧರಿಸಿದ) ನಿನಗೆ ವಂದನೆಗಳು.

3. You are always with Mahalakshmi. No one can have all the virtues and all comprising six attributes you have. You show yourself in four forms Vasudeva, Sankarshana, Pradyumna and Aniruddha. To you I bow down prostrating in all humility and devotion again and again.

**प्रधानपुरुषेशाय नमस्ते पुरुषोत्तम ।[२]**
**सहस्रशिरसे तुभ्यं सहस्रनयनाय ते ॥ ४ ॥**

**सहस्रबाहवे तुभ्यं सहस्रचरणाय ते ।**
**अमूर्ताय नमस्तुभ्यमनेकानेकमूर्तये[३] ॥ ५ ॥**

सहस्रशिरस इत्यादौ सहस्रशब्दो अनन्तवाची । 'अनन्तशीर्षानिन्ताक्षोऽनन्तबाहुः' इत्यादिश्रुतेः ॥ ४ ॥

---

१. पुरुषोत्तम. ख. २. अधिकं ख.कोशे पठ्यते ।
३. एकमूर्ताय ते नमः ख.

**अनेका** अमुख्या बह्व्यो मूर्तयः शरीराणि यस्य स तथोक्तः तस्मै । 'यस्य पृथिवी शरीरम्' इत्यादिश्रुतेः । 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः ।

**अनेका** असाधरणी असमाना वा मूर्तिर्यस्य तस्मै । 'एकशब्दोपमन्यप्रधाना-सहापसङ्ख्याप्रथमसमानवाचि' इति 'एको गोत्रे' (पा.सू. ४.१.९३) इत्यत्र कैयटोक्तेः । तथैव 'एकशब्दोपमन्यप्रधानासहापसङ्ख्याप्रथमसमान-साधारणवाचि' इति पदमञ्जर्युक्तेश्च ।। ५ ।।

4. ಅನಂತ ತಲೆಗಳು ಅನಂತ ಕಂಗಳು ಅನಂತ ಬಾಹುಗಳು ಮತ್ತು ಅನಂತ ಪಾದ ಗಳುಳ್ಳ, ಪ್ರಕೃತಿ(ಲಕ್ಷ್ಮೀ) ಮತ್ತು ಚತುರ್ಮುಖಬ್ರಹ್ಮರಿಗೆ ನಿಯಾಮಕನಾದ ಸರ್ವೋತ್ತಮ ನಾದ ನಿನಗೆ ನಮನಗಳು.

4. Oh Lord ! you have innumerable heads,infinite eyes. infinite arms and infinite feet. You have complete control over the four-headed Brahma.

Oh Lord supreme I bow down to you prostrating in all humility and devotion again and again.

5. ಭೌತಿಕ ದೇಹವಿಲ್ಲದ ಅನಂತ ಅಪ್ರಾಕೃತ ಮಂಗಲಶರೀರಧರಿಸಿದ ಜಡ-ಚೇತನ ಗಳೆಂಬ ಅನಂತ ಅಪ್ರಧಾನ ಪ್ರತಿಮೆಯಲ್ಲಿ ಸನ್ನಿಹಿತನಾದ ಅವಿನಾಶಿಯಾದ ನಿನಗೆ ನಮನಗಳು.

5. You do not have any physical body as we have. Your auspicious attributes themselves are your body. You are present in all destructible living and non-living bodies as a non-destructible Lord.To you I prostrate in all humility and devotion again and again.

**अनेकमूर्तये तुभ्यमक्षराय च ते नमः ।**
**व्यापिने वेदवेद्याय नमस्ते परमात्मने ।। ६ ।।**

**चिन्मात्ररूपिणे तुभ्यं नमस्तुर्यादिमूर्तये ।**
**अणिष्ठाय स्थविष्ठाय बहिष्ठाय नमो नमः ।। ७ ।।**

**अक्षराय** अविनाशिने । यद्वा **'अक्षराय'** अधिकमिष्टदात्र इत्यर्थः । तदुक्तमैतरेयभाष्ये ह्व 'अधिकं क्षरतीत्यक्षरम्' । 'क्षरविनाशसन्ततदानयोः' इति धातोः इति ।। ६ ।।

**तुर्यः** । तुरीयः । आदिर्वराहश्च तुर्यादी । **आदिः** 'कल्पादिहेतुत्वात्क्रोडात्मा केशवः स्वयम्' इति छान्दोग्यभाष्योक्तेः । तौ मूर्तिर्यस्य स तथोक्तः तस्मै ।

अयम् एतेषाम् अतिशयेनाणुः **अणिष्ठः** । अणुशब्दात् अतिशायने तमबिष्ठनौ (पा.सू.५.३.५५) इति इष्ठन् प्रत्ययः । एवमुत्तरत्रापि । अयमेषामतिशयेन स्थूलः स्थविष्ठः । स्थूलशब्दात् प्राग्वदिष्टानि स्थूलदूर.... (पा.सू.६.४.१५६) इत्यादिना ललोपे गुणे च अवादेशः । 'अणोरणीयान् महतो महीयान्' इति श्रुतेः । अयमेषामतिशयेन बहुलः **बहिष्ठः** । बहुलशब्दात् प्राग्वदिष्ठनि प्रियस्थिर.... (पा.सू.६.४.१५७) इत्यादिना बहुलशब्दस्य बहि इत्यादेशः । **तदाह** सूत्रे ह्व 'भूमा सम्प्रसादादध्युपदेशात्' (ब्र.सू. १.३.८) इति ।। ७ ।।

6. ಎಲ್ಲೆಡೆ ಇರುವ, ಎಲ್ಲರ ಒಳಗಿದ್ದು ಪ್ರೇರಿಸುವ, ವೇದೈಕ ಸಮಧಿಗಮ್ಯನಾದ, ಕೇವಲ ಜ್ಞಾನಾನಂದ ಸ್ವರೂಪಿಯಾದ, ತುರ್ಯ ವರಾಹ ಮೊದಲಾದ ರೂಪಧರಿಸಿದ ನಿನಗೆ ನಮನಗಳು.

6. You have been everywhere. You stay in all and motivate all. You can be known only through the holy scriptures. Your body is strange and unique having (jnaana and Ananda) knowledge and bliss as its components having the form of Turya,Varaha and others. To you I prostrate in all humility and devotion again and again.

**वरिष्ठाय विशिष्टाय कनिष्ठाय च ते नमः ।**
**नेदिष्ठाय यविष्ठाय क्षेपिष्ठाय च ते नमः ।। ८ ।।**

**वरिष्ठाय** इति । अयमेषामतिशयेन उरुरुत्कृष्टो वरिष्ठः । तारतम्यावधिः इति यावत् । उरुशब्दादिष्ठनि प्रियस्थिरेत्यादिना उरुशब्दस्य वरादेशः । 'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः' इति श्रुतेः । विशिष्टः

सर्वैः गुणैः सर्वस्मात् विशिष्टः । शिष्लृ विशेषण इत्यतः क्तः । 'इष्टो विशिष्टः' इति सहस्रनामपाठात् । अयमेषामतिशयेन अल्पः कनिष्ठः । अल्पशब्दादिष्ठनि युवाल्पयोः कनन्यतरस्याम् (पा.सू. ५.३.६४) इति अल्पशब्दस्य कनादेशः । तं करोति इति कनिष्ठः । कनिष्ठशब्दात् तत् करोति ण्यन्तात् पचाद्यच् । 'दुःखिबद्धाऽवराद्यास्तु तदधीनत्वहेतुतः । शब्दाः ब्रह्मणि वर्तन्ते' (अनु.व्या. १.४.१. श्लो.३०५) इत्यनुव्याख्यानोक्तेः । एकनिष्ठाय इति पाठे एकशब्दो अन्यार्थो भावप्रधानश्च । एकेन एकत्वेन जीवाद् भेदेन इति यावत् । निष्ठा स्थितिर्यस्य स तथोक्तः । 'पृथगुपदेशात्' (ब्र.सू. २.३.२८) इति सूत्रात्। यद्वा अभिन्ना निष्ठा निष्ठोपलक्षितभगवद्रूपविशेषाः सत्यादयो यस्य स तथोक्तः तस्मात् इत्यर्थः । तदाह सूत्रे 'सैव हि सत्यादयः' (ब्र.सू. ३.३.३८) इति । अयमेषामतिशयेनान्तिकं नेदिष्ठः । 'तद्दूरे तदु अन्तिके' (ईशा.उ.) इति श्रुतेः। अन्तिकशब्दादिष्ठनि अन्तिकबाढयोर्नेदसाधौ (पा.सू. ५.३.६३) इत्यन्तिक-शब्दस्य नेदादेशः । अयमेषामतिशयेन युवा यविष्ठः । युवशब्दादिष्ठनि स्थूलदूरेत्यादिना वलोपे गुणे चावादेशः । अयमेषामतिशयेन क्षिप्रः क्षेपिष्ठः । क्षिप्रफलप्रद इत्यर्थः । क्षिप्रशब्दादिष्ठनि 'स्थूलदूर....' (पा.सू. ६.४.१५६) इत्यादिना रेफलोपो गुणश्च । स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः' (पा.सू. ६.४.१५६) इति सूत्रम् । एषां यणादिपरं लुप्यते पूर्वस्य च गुण इष्टादिष्विति सूत्रार्थः । 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिबृन्दाः' (पा.सू. ६.४.१५७) इति सूत्रम् । प्रियादीनां क्रमात् प्रादयः स्युः इष्टादिषु इति सूत्रार्थः ।। ८ ।।

8. ಅಣುರೂಪನಾದ, ಬೃಹತ್ತಾದ ರೂಪವುಳ್ಳ, ಬ್ರಹ್ಮಾಂಡದ ಹೊರಗೂ ಇರುವ, ಎಲ್ಲರಿಗಿಂತ ಶ್ರೇಷ್ಠನಾದ ಅಪೂರ್ವಗುಣಗಳಿಂದ ವಿಶಿಷ್ಟನೆನಿಸಿದ, ಕರ್ಮಾನುಗುಣವಾಗಿ ದುಃಖ-ಬಂಧನಗಳನ್ನು ನೀಡುವ, (ಕನಿಷ್ಠ)ಎಲ್ಲರಿಗೂ ಅತೀವ ಹತ್ತಿರದಲ್ಲಿರುವ(ನೇದಿಷ್ಠ) ನಿತ್ಯ ಯೌವನಶಾಲಿಯಾದ (ಯುವಿಷ್ಠ) ವೇಗದಿಂದ ಭಕ್ತರ ಇಷ್ಟಾರ್ಥ ನೆರವೇರಿಸುವ, ನಿನಗೆ ನಮನಗಳು.

8. You can be in the form of the smallest atom and can be in the form of the mightiest mountain at the same time. Again you can be inside the universe and outside the universe, giving grief and bondage to the souls depending on their karma . You are the nearest to all, ever youthful, granting thier desires they deserve. You grant desires quickly to your devotees. To you I bow prostrating in all humility and devotion.

**पञ्चात्मने नमस्तुभ्यं सर्वान्तर्यामिणे नमः ।**
**कलाषोडशरूपाय सृष्टिस्थित्यन्तहेतवे ॥ ९ ॥**

पञ्चानां देवर्षिपितृचक्रवर्तिनराणामात्मने आदानादिकर्त्रे षोडश च ते च कलादेवताश्च कलाः षोडश तासां रूपाणि शरीराणि यस्मात् स तथोक्तः तस्मै । कलादेवताश्च 'विष्णोः प्राणस्ततः श्रद्धा' इत्यादिना षट्प्रश्नभाष्योक्ता ज्ञेयाः ॥ ९ ॥

9. ದೇವ-ಋಷಿ-ಪಿತೃ-ಚಕ್ರವರ್ತಿ-ಮನುಷ್ಯೋತ್ತಮರಿಗೆ ಇಷ್ಟಾರ್ಥವನ್ನು ಪೂರೈಸುವ, ಎಲ್ಲರೊಳು ನಿಯಾಮಕನಾದ ಪ್ರಾಣ-ಶ್ರದ್ಧಾ ಮೊದಲಾದ ಕಲಾದೇವತೆಗಳಲ್ಲಿ ಅನುಗ್ರಾಹಕನಾಗಿರುವ, ಸೃಷ್ಟಿ-ಸ್ಥಿತಿ-ಲಯಕಾರಣನಾದ ನಿನಗೆ ನಮನಗಳು.

9. Deva.rushi, pitru chakravarthi and Manushyothamas all get their deserved desires fulfilled by you. You have bestowed praana and shraddha to the kala deities. You are the cause of creation,sustenance and destruction. To you I bow in all humility and devotion again and again.

**नमस्ते गुणरूपाय गुणरूपनिवर्तिने ।**
**व्यस्ताय च समस्ताय समस्तव्यस्तरूपिणे ॥ १० ॥**

गुणेषु सत्वादिषु रूपाणि यस्य स तथोक्तः तस्मै । 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य' (तैत्ति.) इत्यादिश्रुतेः । गुणा आनन्दादयो रूपं स्वरूपं यस्य इति वा गुणानां सत्वादीनां रूपाणां निवर्तिने स्रष्ट्रे गुणैः सत्वादिभिः रूपाणां महदादीनां निवर्तिने स्रष्ट्रे वा । 'ससर्ज भगवानादौ त्रीन् गुणान् प्रकृतेः परः । महत्तत्त्वं ततो विष्णुः सृष्टवान्' इत्यादेः । समस्ताय प्रलये सर्वरूपाणाम्

उपसंहर्त्रे । 'पूर्णमदः पूर्णमिदम्' (ईशा.उ. शान्तिमन्त्रः) इत्यादिश्रुतेः 'स्वाप्ययात्' (ब्र.सू. १.१.९) इति सूत्रात् । **समस्ताय,** पूर्णाय इति वा । 'सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव च' (गी.भा. ११.१६ उदाहृतभाल्लव्य-शाकवचनम् ) इति गीताभाष्योदाहृतादभिधानात् समस्ताः सर्वे समया व्यस्ता निरस्ता यस्मात् तत् तथोक्तं । तच्च तद्रूपं च तदस्यास्ति इति तथोक्ताय । 'रचनानुपपत्तेश्च नानुमानम्' (ब्र.सू. २.२.१) इत्यादिना सर्वसमयानां व्यासरूपेण निरसनात् इति भावः । समस्तान् सृष्ट्यादीनष्टौ व्यस्तान् सृष्ट्वा रक्षंश्चतुरः यथासम्भवं जीवजडेषु रूपयितुं शीलमस्यास्ति इति तथोक्तः तस्मै वा । 'उत्पत्तिस्थितिसंहारा नियतिः ज्ञानमावृतिः । बन्धमोक्षौ च पुरुषाद्यस्मात् स हरिरेकराट्' (ब्र.सू.भा. १.१.२ ) इति स्मृतेः । 'अजस्य नाभाविति यस्य नाभेरभूच्छ्रुतेः पुष्करं लोकसारम् । तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे' (ब्र.सू.भा.१.१.१ उदाहृतस्कान्दवचनम्) इति श्रुतेः'। इति स्मृतेश्च । यद्वा समस्तानि पूर्णानि व्यस्तानि अवताररूपाणि यस्य तत् तथोक्तम् । तच्च तत् रूपं च तदस्यास्ति इति तथोक्तः तस्मै । 'पूर्णमदः पूर्णमिदम्' इति श्रुतेः । अथ वा समस्तेषु लोकेषु व्यस्तानि विस्तृतानि रूपाण्यस्य सन्तीति तथोक्तः तस्मै । एकैकस्मिन् देहे द्वासप्ततिसहस्रनाडीषु तावद् भगवद्रूपाणां ततोऽधिकभगवद्रूपाणां च ऐतरेयभाष्ये अभिधानात् । तानि च वचनानि न विस्तारभियेहोदाह्रियन्ते । समस्तानि व्यस्तानि रूपाण्यस्य सन्तीति तथोक्तः तस्मात् इति वा । एकैकमपि रूपं समस्तं च इति भावः । 'अणोरणीयान् महतो महीयान्' ( महानारायणोपनिषद् ) इत्यादिश्रुतेः । सम्यक् अस्त व्यस्तं श्रुत्यर्थं रूपयितुं निरूपयितुं शीलं यस्यास्ति इति तथोक्तः तस्मै वा । तदुक्तम् । 'अस्तव्यस्तं समस्तश्रुतिगतमधमै रत्नपूगं यथान्धैरर्थं लोकोपकृत्यै गुणगणनिलयः सूत्रयामास कृत्स्नं योसौ व्यासाभिधानः' (वायुस्तुतिः क) इत्यादि ।। १० ।।

10. ಸತ್ತ್ವ-ರಜಸ್-ತಮೋಗುಣಗಳಲ್ಲಿ ನಿಯಾಮಕನಾಗಿರುವ, ಸತ್ತ್ವಾದಿಗುಣಗಳ

ಮೂಲಕ ಮಹತ್ತತ್ವಾದಿ ವಸ್ತುಗಳನ್ನು ಸೃಷ್ಟಿಸುವ, ಸೃಷ್ಟಿಯ ಆರಂಭದಲ್ಲಿ ಬಹುರೂಪ ಗಳನ್ನು ತಳೆದ, ಪ್ರಲಯಕಾಲದಲ್ಲಿ ಮೂಲರೂಪದಲ್ಲಿ ಎಲ್ಲವನ್ನು ವಿಲೀನಗೊಳಿಸಿಕೊಂಡ, ಎಲ್ಲ ಪ್ರಮಾಣಬಾಹಿರ ಸಿದ್ಧಾಂತಗಳನ್ನು ನಿರಾಕರಿಸಿದ ನಿನಗೆ ನಮನಗಳು.

10. You are the creator and controller of Satwa, Rajas and Tamas. Using them Mahattatwa has been created in the commencement of the creation. Many forms have been taken by you. During Pralaya, everything gets into you. You have refuted all those theories which have not been supported by the valid scriptures. To you I bow down prostrating in all humility and devotion, again and again.

**आदिमध्यान्तशून्याय तद्वेत्रे च नमो नमः ।**
**प्रणवप्रतिपाद्याय नमः प्रणवरूपिणे ॥ ११ ॥**

**आदि** इति । **आदि मध्यान्तशून्याय** । अपरिच्छिन्नत्वात् इति भावः । आद्यन्ताभावोक्त्यैव मध्याभावसिद्धावपि पुनः तदुक्तिरुपचारत्वपरिहारार्थम् 'नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप' इति गीतायाम् अर्थोक्तेः सृष्टिस्थितिलयशून्याय वा । अत्र स्थित्यभावोक्तिश्छत्रिन्यायेन इति बोध्यम् । पराधीनस्थित्यभावपरा वेयमुक्तिः ज्ञेया । **तद्वेत्रे** । दातृतयोत्पत्यादिमते । **प्रणव** ओङ्कारो **रूपं** प्रतिमा उपासनाधिष्ठानमस्यास्ति इति तथोक्तः तस्मै । स्वात्मानं प्रणौति स्तौति इति व्युत्पत्या प्रणवाख्यं वेदस्थं रूपमस्यास्ति इति वा तथोक्तः तस्मै । 'वेदस्थः प्रणवाख्योऽसावात्मानं यत्प्रणौत्यतः' इति गीतातात्पर्योदाहृतवचनात् ॥ ११ ॥

11. ಹುಟ್ಟು-ರಕ್ಷಣೆ-ವಿನಾಶಗಳಿಲ್ಲದ, ಅವುಗಳನ್ನು ಯಥೋಚಿತವಾಗಿ ನೀಡುವ, ಓಂಕಾರವನ್ನು ಪ್ರತಿಮೆಯಾಗಿಸಿಕೊಂಡ, ಓಂಕಾರ ಪ್ರತಿಪಾದ್ಯನಾದ ಶ್ರೀಹರಿಗೆ ನಮನಗಳು.

11. You do not have any birth or protcetion or death or destruction, degradation anytime. But you cause them suitably to others. You are the embodiment of Omkara. Oh Shri Hari ! I bow down prostrating in all humility and devotion.

**लोकयात्राप्रसिद्ध्यर्थे सृष्टब्रह्मादिरूपिणे ।**
**नमस्तुभ्यं नृसिंहादिमूर्तिभेदाय विष्णवे ॥ १२ ॥**

सृष्टं ब्रह्म चतुर्मुखो यस्मात् तथोक्तं तत्सम्बुद्धिः । सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः' इति नलोपः । चतुर्मुखस्य नपुंसकब्रह्मशब्दवाच्यत्वं च 'तस्मादेतद्-ब्रह्म नामरूपमन्नं च जायते (आथर्व.उ.१.९) इति श्रुतौ दृष्टम् । पुल्लिङ्गयोः एव वा बहुव्रीहिः । ब्रह्मसृष्टिः परमकारुणिकस्य भगवतो परप्रयोजनायैव इत्यभिप्रेत्याह- **लोक** इति । लोकस्य वैकुण्ठादिलोकस्य यात्रायाः प्रसिध्यर्थम् इत्यर्थः । ब्रह्मोपदेशेनैव सर्वलोकानां मुक्तिः इति भावः । तदुक्तम् ह्न 'उपदेशो ब्रह्मणस्तु सर्वेषामेव मुक्तये' इत्यनुव्याख्याने । आदिरूपिणे वराहरूपाय । यद्वा अः व्यासः आदिर्ज्ञप्तिकारणं (गुरुः इति यावत्) यस्य स आदिर्मध्वः, तस्य रूपं यस्मात् स आदिरूपः । आदेशः सो अस्य अस्ति इत्यादिरूपेण 'अआअंअः पुराणर्षिः व्यासः शाखासहस्रकृत्' इत्यभिधानात् । 'पुर एव पूरितमपूरयत्पुनर्नन्नु कृष्ण एष परमार्थसङ्ख्यया' (म.वि.८.) इति 'स्मराननो भुवनजीवनमाबभाषे' (म.वि.२.२) । वेदान्तमार्गपरिमार्गणदीनदूना दैवीः प्रजा विशरणाः करुणापदं नः । आनन्दयेः सुमुख भूषितभूमिभागो रूपान्तरेण मम सद्गुणनिर्णयेन' इति च श्रीसुमध्वविजयोक्तेः । प्रणवप्रतिपाद्याय इत्यारभ्यादिरूपिण इत्यन्तो ग्रन्थः क्वचित् पुस्तके क्षेपिष्ठाय च ते नमः' इत्यनन्तरं पठ्यते । नृसिंह स्यादिर्नृसिंहादिः इति तत्पुरुषः । नृसिंह आदिः यस्येति बहुव्रीहिश्च द्वावपि इह तन्त्रेणोपात्तौ । नृसिंहादिमूर्तिभेदा यस्मिन् तथोक्तं तदयति गच्छति वाचकत्वेन इति नृसिंहादिमूर्तिभेदायः तस्मै । 'गुहायां निहिताः सप्तसप्त' इत्यत्रेव 'लोपः समाने' इत्येकयलोपो बोध्यः । तदुक्तम् ऐतरेयभाष्ये ह्न 'वराहो वामनः सिंह इति रूपत्रयं हरेः । पूर्वोत्तरार्णमध्येषु स्थितमुक्तं सनातनम्' इत्यादि । नृसिंहाय इत्यपि क्वचित्पाठः । तदा मूर्तिभ्यः शरीरेभ्यो भेदो यस्य स तथोक्तः तस्मै । 'यस्य पृथिवी शरीरं पृथिव्या अन्तरः'

इत्यादिश्रुतेः । मूर्तिषु भेदा विशेषा यस्य स तथोक्तः तस्मात् इति वा । 'भेदशब्दा विशेषं तु हरावन्यत्र भिन्नताम्' इत्यनुव्याख्यानोक्तेः ।। १२ ।।

12. ಲೋಕಕಲ್ಯಾಣಕ್ಕಾಗಿ ಚತುರ್ಮುಖನಿಗೆ ಜನ್ಮ ನೀಡಿ, ಅವನ ಮೂಲಕ ಸೃಷ್ಟಿ ಮತ್ತು ಸಕಲ ಸಾತ್ವಿಕಜೀವರಿಗೆ ಪ್ರಲಯಕಾಲದಲ್ಲಿ ಪ್ರವಚನ ಮಾಡಿಸಿ ಅನುಗ್ರಹಿಸುವ, ನರಸಿಂಹ-ವರಾಹ ಮೊದಲಾದ ಅನೇಕ ಮಂಗಲರೂಪಗಳನ್ನು ಧರಿಸಿದ ನಿನಗೆ ನಮನಗಳು.

12. You have created Chaturmukha Brahma for the good of the world. Though you have made him deliver your message during Pralaya to the Satwikas to bless the souls. You have taken many auspicious forms of Narasimha and others. To you I bow down prostrating in all humility and devotion.

**विपाकैः कर्मभिः क्लेशैरस्पृष्टवपुषे नमः ।**
**नमो ब्रह्मण्यदेवाय तेजसां निधये नमः ।। १३ ।।**

**विपाकैः** पक्वैः । **क्लेशैः** क्लेशसाधनैः । **ब्रह्मण्यः** ब्रह्मणि साधुः । तत्र साधुः (पा.सू. ४.४.९८) इति यत् । ब्राह्मणेभ्यो हितो वा अब्रह्मण्यानां देवाय विजिगीषवे वा । 'दिवु-क्रीडाविजिगीषा' इत्यादेः ।। १३ ।।

13. ಕರ್ಮಬಂಧನ-ದುಃಖಗಳಿಂದ ಸದಾ ವಿದೂರನಾದ, ಬ್ರಾಹ್ಮಣರ ರಕ್ಷಕನಾದ, ತೇಜಸ್ಸಿನ ಸೆಲೆಯಾದ ನಿನಗೆ ನಮನಗಳು.

13. Not bound by any act, and always far from only bondage or sorrow, you are the protector of righteous Brahmanas and you are the source of all brightness. To you I bow down prostrating in all humility and devotion.

**नित्यासाधारणानेकलोकरक्षापरिच्छिदे ।**
**सच्चिदानन्दरूपाय वरेण्याय नमो नमः ।। १४ ।।**

नित्या वेदाश्च साधारणा नित्यानित्याश्च अनेके लोकाश्च तेषां **रक्षा** रक्षणं यस्मात् स तथोक्तः तत्सम्बुद्धिः । तदुक्तम् ह्न 'नित्या वेदाः पुराणाद्याः कालः प्रकृतिरेव च नित्यानित्यम्' (तत्त्वसं.) इति । **अपरिच्छिदे** अपरिच्छिन्नाय ।

**सच्चिदानन्दरूपाय** इति । आत्मत्वस्याप्युपलक्षणम् । एतेन मनुष्योत्तमोपास्यगुणचतुष्टयमप्युक्तं ज्ञेयम् । **वरेण्याय** वरणीयाय । वृञ ऐण्यः ।। १३ ।।

13. ನಿತ್ಯವಾದ ವೇದಗಳು ಹಾಗೂ ನಿತ್ಯಾನಿತ್ಯವಾದ ಕಾಲ, ಪ್ರಕೃತಿಮುಂತಾದವುಗಳಿಗೆ ರಕ್ಷಣೆ ನೀಡುವ,ಜ್ಞಾನ-ಆನಂದ-ಸ್ವಾಮಿತ್ವ ಮೊದಲಾದ ಮಂಗಲಗುಣಸ್ವರೂಪನಾದ ಎಲ್ಲರಿಂದ ಆರಾಧ್ಯನಾದ ನಿನಗೆ ನಮನಗಳು.

13. To Eternal vedas, eternal or non-eternal time and Prakruti, you give full protection. knowledge and bliss, being the master of all and the greatest of holding all auspicious virtues. To you I bow down in prostration in all humility and devotion.

**यजमानाय यज्ञाय यष्टव्याय नमो नमः ।**
**इज्याफलात्मने तुभ्यं नमः स्वाध्यायशालिने ।। १५ ।।**

**यजमानाय** रामादिरूपेण अश्वमेधादियज्ञकर्त्रे । तदुक्तं ह्य श्रीमन्महाभारततात्पर्यनिर्णये 'सतां च धर्मम् । सशिक्षयन्नयजदुत्तमकैः स्वयज्ञैर्भवाब्जजन्मप्रमुखाः सचिवाश्च यत्र (म.ता. नि.९-१८) । 'पुनश्च यज्ञैरयजत् स्वमेव वराश्वमेधादिभिराप्तकामः । रेमेऽभिरामो नृपतींश्च शिक्षयन्' (म.ता.नि. ९-४१) इति । यज्ञभोक्तृत्वाद् यज्ञः । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति भगवदुक्तेः । रामरूपेण अहल्यां गौतमेन योजयति इति वा यज्ञः । 'यजदेवपूजासङ्गतिकरणदानेषु' इति धातोः । तदुक्तम्ह्य 'अथो अहल्यां पतिनाभिशप्तां प्रधर्षणादिन्द्रकृताच्छिलीकृताम् । स्वदर्शनात्मानुषतामुपेतां संयोजयामास स गौतमेन' (म.ता.नि. ) इति । **यष्टव्यः** यज्ञोद्देशः । 'मां विधत्ते अभिधत्ते माम्' (भा. ११.२२.४३) इत्यादेः । **इज्या** यागः । यजतेभवि क्यप् । तस्याः फलमादयति भोजयति इति इज्या फलात्मा तस्मै स्वाध्यायशीलिने वेदाध्ययनशीलाय । 'वैकुण्ठस्याखिला वेदा उद्गीर्यन्तेऽनिशं यतः' (द्वा.स्तो. १.७) इति द्वादशस्तुत्युक्तेः ।। १५ ।।

15. ತಾನೇ ರಾಮ-ಕೃಷ್ಣಾದಿರೂಪಗಳಿಂದ ಯಜ್ಞವನ್ನು ಮಾಡಿದ, ಭಕ್ತರ ಅನುಗ್ರಹಕ್ಕಾಗಿ ಯಜ್ಞಗಳಿಂದ ಆರಾಧ್ಯನಾದ, ಯಜ್ಞಸಾಧನಗಳಲ್ಲಿ ನಾನಾ ರೂಪಗಳಿಂದ ಇರುವ,

ಸತ್ಕಾರ್ಮಗಳ ಫಲಗಳನ್ನು ಭಕ್ತರಿಗೆ ಕರುಣಿಸುವ, ವೇದಶಾಸ್ತ್ರಗಳನ್ನು ಪ್ರವಚನ ಮಾಡುತ್ತಿರುವ ನಿನಗೆ ನಮನಗಳು.

15. Oh Lord ! You have performed sacrifices during your incarnations as Rama, Krishna and other forms to give your devotees the guidance and the fruits of such sacrifices, being in them, performing them and delivering the discourses on Vedas. To you I bow down in prostration in all humility and devotion.

**नमः परमहंसाय नमः सत्वगुणाय ते ।**
**स्थिताय परमे व्योम्नि भूयो भूयो नमो नमः ।। १६ ।।**

**हंसः** । दैत्यहन्तृत्वाद् हंसः । 'हन्तृत्वाद्धंसनामासौ सोऽहं चासावहेयतः' इति बृहद्भाष्योक्तेः । यद्वा जहाति इति हम् । 'ओहाक्त्याग' इत्यतो डम् प्रत्ययः। सारशब्दाच्च तद्धिता इति डः । हं चासौ सश्च हंसः । 'नित्यं हीनोऽखिलैर्दोषैः साररूपो यतो हरिः । हंस इत्युच्यते' इति काठकभाष्योक्तेः । **परमः** उत्तमः । परः शत्रुर्मियते हिंस्यते येन वा परमः । 'मिङ् हिंसायाम्' इति धातोः । परमश्चासौ हंसश्च परमहंसः तस्मै । **परमे व्योम्नि** हृदयाकाशे । 'यो वेदनिहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता' (तै.उ. ) इति श्रुतेः ।। १६ ।।

16. ಪರಮಹಂಸರೂಪಿಯಾದ, ಅಪ್ರಾಕೃತ ಸತ್ತ್ವಗುಣ ಸಂಪನ್ನನಾದ, ಹೃದಯಾಕಾಶದಲ್ಲಿ ವಿರಾಜಮಾನನಾದ ನಿನಗೆ ನಮೋ ನಮಃ.

16. In the form of Parama Hamsa. you have highlighted the unique Satwika nature, staying in Hridayakasha. To you I bow down prostrating in all humility and devotion.

**संसारसागरे घोरे विषयावर्तसङ्कुले ।**
**अपारे दुस्तरेऽगाधे पतितं कर्मभिः स्वकैः ।। १७ ।।**

**अनाथमगतिं भीरुं कृपया परया हरे ।**
**मामुद्धर दयासिन्धो सिन्धोरस्मात्सुदुस्तरात् ।। १८ ।।**

**मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।**
**तत्क्षन्तव्यं प्रपन्नानामपराधसहो ह्यसि ।। १९ ।।**

**अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे ।**
**अगतिं शरणागतं हरे कृपया केवलमात्मसात् कुरु**
**।।२० ।।**

**जन्मप्रभृतिदासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ।**
**त्वं च स्वामी गुरुर्माता पिता च मम माधव ।। २१ ।।**

**विषयाः** शब्दाद्या एवावर्ता अम्भोभ्रमाः तैः सङ्कुले 'स्यादावर्तोऽम्भ-साम्भ्रमः' इत्यमरः । स्वकैः कर्मभिरिति वैषम्यादिदोषान् हरेः पर्यहार्षीत् । तदाह सूत्रेह्न 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (ब्र.सू. २.१.३५) इति ।
।। १८-२१ ।।

17-18. ನನ್ನ ಕರ್ಮಕ್ಕೆ ಅನುಗುಣವಾಗಿ ದಾಟಲಾಗದ, ಅತ್ಯಂತ ಆಳವಾದ, ಭಯಂಕರವಾದ ಸಂಸಾರ ಸಾಗರದಲ್ಲಿ ಮುಳುಗಿದ, ಭೋಗವಸ್ತುಗಳ ಪ್ರೀತಿಯೆಂಬ ಸುಳಿಯಲ್ಲಿ ಸಿಲುಕಿದ, ರಕ್ಷಕರಿಲ್ಲದ, ಭೀತನಾದ ನನ್ನನ್ನು,ಕರುಣಾಸಾಗರ ಶ್ರೀಹರಿಯೇ! ಕೇವಲಕರುಣೆಯಿಂದ ಉದ್ಧರಿಸು.

19. ನಾನು ನಿನಗೆ ಶರಣಾಗತನಾಗಿರುವೆ. ನೀನು ಭಕ್ತರ ಅಪರಾಧಗಳನ್ನು ಗಣನೆಗೆ ತೆಗೆದುಕೊಳ್ಳದ ಉದಾರಿಯೂ ಆಗಿರುವೆ. ಮಂತ್ರ-ತಂತ್ರ-ಭಕ್ತಿಗಳಿಲ್ಲದ ನನ್ನ ಅರ್ಚನೆಯಲ್ಲಿನ ತಪ್ಪುಗಳನ್ನು ಮನ್ನಿಸು.

20. ಅನಂತ ಅಪರಾಧಗಳ ತಾಣನಾದ, ಭಯಂಕರವಾದ ಸಂಸಾರಸಾಗರದಲ್ಲಿ ಮುಳುಗಿದ, ಬೇರಾರೂ ರಕ್ಷಕರಿಲ್ಲದ ನಿನಗೆ ಶರಣಾಗತನಾದ, ನನಗೆ ಕೇವಲ ಕೃಪೆಯಿಂದ ನಿನ್ನ ದರ್ಶನ ನೀಡು.

21. ಎಲ್ಲ ಜನ್ಮಗಳಲ್ಲೂ ನಾನು ನಿನ್ನ ದಾಸ. ಶಿಷ್ಯ ಹಾಗೂ ಮಗನೂ ಆಗಿರುವೆ. ನೀನು ನಮ್ಮ ಒಡೆಯ. ಗುರು-ತಾಯಿ-ತಂದೆ-ಸರ್ವಸ್ವವೂ ಆಗಿರುವಿ.

17-18. According my acts, I have to pass through the most horrible cycle of life and death, being in deep troubles and being in vicious whirlpool of wordly desires, being helpless, none to protect me by giving a helping hand. Only you, only you can help me to be out of this mess. Protect me ! protect me.

19. I have fully surrendered to you to be out of these troubles of the cycle of life and death. I am the storehouse of unpardonable sins. Be kind enough to help me, forgive me You have been generous. Forgive for all the lapses I committed while reciting mantras in the prescribed worship, totally lacking in devotion and concentraion

20. I am the abode of all blunders, being in the endless whirepool of life and death. By kind grace give me a chance to have your glance.

21. I am your humble servant I am your son and disciple always, life after life.

**नाहं हितं प्रजानामि त्वां भजाम्येव केवलम् ।**
**बुध्वैवं मम गोविन्द [१]मुक्त्युपाय नमोऽस्तु ते ।। २२ ।।**

**नाहम्** इति ।। अहं जीवाद् भिन्नम् इत्यर्थः । 'हंनाम मन्यमानत्वाज्जीवस्य समुदाहृतम् । जीवादन्यो यतो विष्णुरहंनामा ततस्मृतः' इति छान्दोग्य-भाष्योदाहृतस्मृतेः । एतेनोत्तमपुरुषप्रयोगादेवाहमित्यस्य लाभसम्भवे पुनरहम् इत्युक्तिर्व्यर्थेति निरस्तम् । अहम् इति [२]मान्तमव्ययम् केवलमित्यन्यदेवता व्यावर्तयति । मुक्तेः उपाय हेतो । इच्छाविशेषरूपस्य मुक्तिहेतुप्रसादस्य भगवदभिन्नत्वात् इति भावः । तदुक्तम् 'अथातो ब्रह्मजिज्ञासा' (ब्र.सू. १.१.१) इति । 'यस्य प्रसादात्' इति च श्रुतिः ।। २१ ।।

22. ನಾನು ಹಿತವನ್ನರಿಯೆ. ಕೇವಲ ನಿನ್ನನ್ನು ಆರಾಧಿಸುವೆ. ನೀನೇ ಮುಕ್ತಿ ನೀಡುವ ಮಾರ್ಗದರ್ಶಿ. ಈ ನನ್ನ ನಿವೇದನೆ ಆಲಿಸಿ ನನ್ನನ್ನು ಉದ್ಧರಿಸು.

---

१. 'मुक्त्युपायेन मां हरे. ख. २. मां मन्तव्या- मुद्रितपुस्तके

22. I know not what is good for me. I only pray and worship you. You are my guide to show me the path of liberation. Only you can grant liberation, None else. Listen to my requests and appeals, to do the needful.

**त्वमेव मे प्रियो नान्यो नेदं नेदमितीति च ।**
**बुद्धियोगं च मे देहि येन त्वामुपयाम्यहम् ॥ २३ ॥**

**त्वमेव** इति । इदं ब्रह्म इदं न । मूर्तामूर्तविलक्षणम् इत्यर्थः । इतीदं बुद्धियोगं बुद्धिलक्षणमुपायं मे देहि इति इतिशब्दस्यावृत्या योजना । अत्र इदम् इति नपुंसकत्वम् । 'अहमेव इदं सर्वोऽस्मि' 'अजानता महिमानंतवेदम्' इत्यादाविव बोध्यम् । यद्वा त्वं इदं मूर्तं न इति इदममूर्तं न इति च बुद्धियोगम् इत्यर्थः । 'नेति नेति' इति श्रुतेः । 'मूर्तामूर्तमिदं रूपं ब्रह्मणः प्रतिमात्मकम् । नैतत् स्वरूपमेतस्य तद्धि सर्वं परं सदा' इति बृहद्भाष्योदाहृतश्रुतेश्च । अथवा न इदं ना इदमिति पदच्छेदः । अयं चासौ ना परमपुरुषश्च इदं ना स इदं जगत् नेति इदं नाजीवः इदं परब्रह्म न इति च बुद्धियोगम् इत्यर्थः । अल्पज्ञत्वेन जीव-स्यानुभूतत्वात् । ब्रह्मणश्च सार्वज्ञादिना प्रमाणप्रमितत्वात् तयोरभेदायोगात् इति भावः । यद्वा इतिशब्दो हेत्वर्थः । यस्मात् त्वमिदं जगत् न अतस्त्वमिदं जगन्नेति इदं जगत् त्वं नेति वा बुद्धियोगम् इत्यर्थः । अथवा इति यस्मात् त्वम् इदं पुरोवर्तिप्रतीकं न । [1]अतः इदं प्रतीकं त्वं न इति बुद्धियोगं देहि इत्यर्थः । 'नेदं यदिदमुपासते' इति श्रुतेः । यद्य इति यस्मात् त्वं इदं प्रतीकं न, तस्मात् इदम् अस्मिन् प्रतीके त्वं न । परमपुरुष इति बुद्धियोगं देहीत्यर्थः । 'सप्तसु प्रथमा' इति सूत्रात् । 'समना च' (ब्र.सू.४.२.७) इति सूत्रे 'ना' परमपुरुष इति व्याख्यानात् । प्रतीकं नैव विष्णुः 'यन्मिथ्योपासाह्यनर्थदा । 'प्रतीकसंस्थितत्वेन ध्येयो विष्णुः न चान्यथा' इति च अनुव्याख्यानोक्तेः । तदाह सूत्रे ह्न 'न प्रतीके न हि सः' इति । अथवा 'त्वं इदं जगत् न । कथं तर्हि,

१. 'अतः इदं प्रतीकम्' इति भागः मुद्रितपुस्तके नास्ति ।

'सर्वं खल्विदं ब्रह्म' इति श्रुतिः इत्यत आह ह्न नेदम् इति ।। इदं जगत् त्वं न, त्वमिव नञः सादृश्यार्थत्वात् । तदुक्तम्ह्न 'सादृश्यं प्रतिषेधश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः' इति । श्रुतिस्तु सादृश्याशयेति ज्ञेयम् । तदुक्तं भागवतेह्न 'इदं हि विश्वं भगवानिवेतरः' इतीत्यलं प्रपञ्चेन ।। २३ ।।

22. ನನಗೆ ನಿನ್ನಷ್ಟು ಪ್ರಿಯವಸ್ತು ಬೇರೊಂದಿಲ್ಲ. ನೀನು ಜಡವಸ್ತು-ಚೇತನವಸ್ತುಗಳಿಗಿಂತ ಭಿನ್ನ ಹಾಗೂ ಉತ್ತಮನೆಂಬ ಬುದ್ಧಿಜಾಗೃತಿಯನ್ನು ಕರುಣಿಸಿ ನಿನ್ನ ಬಳಿಗೆ ಬರುವಂತೆ (ಮುಕ್ತನಾಗುವಂತೆ) ಅನುಗ್ರಹಿಸು.

22. I like you most and love you most. You are different from any animate or inanimate object. Please bring your awareness and make me reach you.

**इति विज्ञाप्य देवेशं वैश्वदेवं स्वधामनि ।**
**कुर्यात्पञ्चमहायज्ञानपि गृह्योक्तवर्त्मना ।। २४ ।।**

**स्वधामनि** । स्वस्य गृहे । पञ्चमहायज्ञान् इति । पाठहोमौ इत्यर्थः । तदुक्तम् ह्न 'पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः । एते पञ्च महायज्ञाः' इति । उपलक्षणमेतत् । 'दैवमेवापरे यज्ञं योगिनः पर्युपासते' इत्यादि भगवद्गीतोक्ता यज्ञाः 'एवमात्मप्रियापुत्रो वित्तं द्विविधमित्यपि । 'पञ्चभिः क्रियते यज्ञः पुरुषः पशुरेव च' इति अव्याकृतब्राह्मण बृहद्भाष्योक्त यज्ञाश्च ग्राह्याः । यज्ञस्वरूपाणि तु तत्रैव उक्तानि ज्ञेयानि । नात्र विस्तरभिया प्रपञ्च्यते ।। २३ ।।

24. ಎಲ್ಲ ದೇವತೆಗಳಿಗೆ ನಿಯಾಮಕನಾದ ದೇವೋತ್ತಮನಾದ ಶ್ರೀಹರಿಯನ್ನು ಹೀಗೆ ಪ್ರಾರ್ಥಿಸಿ ಪಂಚಮಹಾಯಜ್ಞಗಳನ್ನು (ದೇವಯಜ್ಞ-ಪಿತೃಯಜ್ಞ-ಬ್ರಹ್ಮಯಜ್ಞ-ಭೂತಯಜ್ಞ-ನೃಯಜ್ಞ) ಶಾಸ್ತ್ರೋಕ್ತಕ್ರಮದಂತೆ ನಡೆಸಬೇಕು.

24. Thus we should pray and worship the supreme Lord as the motivator and perform Panchamahayagna (Deva yagna-Pitru

Yagna, Brahmayayna-Bhoota Yagna and Nriyagna) in a systematic way prescribed in Vedas.

**मादृशो न परः पापी त्वादृशो न दयापरः[१] ।**
**इति मत्वा जगन्नाथ रक्ष मां गरुडध्वज ।। २५ ।।**

परः । अन्यः । दयापरः । दयापूर्णः । दयया पालको वा । पॄ पालन-पूरणयोः इति धातोः । मत्वा इति । एतदावर्तते । इति मत्वा ज्ञात्वा मां लक्ष्मीं प्रतिमत्वान्मत्सदने मह्यं संश्रियं प्रयच्छन् सदा तिष्ठेति प्रबोध्य रक्षेत्यर्थः । एतेन 'मन अवबोधन' इत्यतः केवलादन्तर्णीतण्यर्थाद् वा क्त्वाप्रत्यये अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति (पा.सू. ६.४.३७) इत्यादिना नलोपः । एतेनाभ्यर्हितत्वादेव माम् इत्यस्य लाभ-सम्भवान्माम् इत्युक्तिर्व्यर्थेति परास्तम् । लक्ष्मीवाचकत्वाङ्गीकारात् । 'इन्दिरा लोकमाता मा' इति अमरः । अत्रादौ 'जितं' इति च जयवाचकशब्दस्य निबन्धनादन्ते च लक्ष्मीवाचकस्य 'माम्' इत्यस्य 'स्वाङ्कस्थलक्ष्मीर्गरुडांससंस्थः' इत्युक्तश्रीकरमूर्तिलक्षणवाचकस्य गरुडध्वजशब्दस्य निबन्धनात् च इदं स्तोत्रं वक्तृस्तोत्रपाठकेभ्यः सकलदुर्जनजयलक्ष्म्यादिप्रदम् इति सूचितम् ।। २५ ।। इत्यशेषमतिमङ्गलम् ।

25. ಎನಗೆ ಸಮನಾದ ಪಾಪಿ ಇಲ್ಲ. ನಿನಗೆ ಸಮನಾದ ದಯಾಳುವಿಲ್ಲ. ಗರುಡನ ಮೇಲೆ ಆಸೀನನಾದ ನೀನು ಶರಣಾಗತನಾದ ನನ್ನನ್ನು ರಕ್ಷಿಸು.

25. There is no sinner like me. There is no benevolent like you. Oh Lord ! seated on Garuda, protect me for I have submitted myself totally at your feet.

**चतुर्मुखनुतं पूर्णगुणं निर्दोषमिष्टदम् ।**
**गुरुं हृत्पद्मसद्मानं भजे श्रीनृहरिं श्रये ।।**

---

१. अयं श्लोकः मुद्रितपुस्तके न दृश्यते ।

विलङ्घ्याब्धिं सतीचूडामणिं रामाय योऽदिशत् ।
ऐश्वर्यपर्युपासीनं मारुतिं तं प्रणौम्यहम् ॥

दण्डार्हबुद्धिविषयो नृपपूरुषाणां
राज्यार्हबुद्धिविषयः करिपुर्यभूद्यः ।
तं सर्ववाङ्मनसदैवतभारतीशरूपं
महीतलगतं प्रणमामि मध्वम् ॥

आमध्वसत्यसङ्कल्पपर्यन्ता गुरवोऽखिलाः ।
विधूतदुर्वादिमताः कृपयंत्वचिरान्मयि ॥

यदनुग्रहमात्रेण निरस्ता व्याधयो मम ।
अनन्ताचार्यनाम्नो मे गुरूंस्तानन्वहं भजे ॥

भक्त्या बद्धां जितन्तेस्तुतिविवृतिपदामर्पितां वैजयन्तीं
बालेनानन्तसख्यामलगुरुहृदयाम्भोजमध्ये निषण्णः ।
भूमा सच्चित्सुखात्मा अपहतसकलावद्यगन्धो दयार्द्रो
लक्ष्मीशः पुंमृगेन्द्रो वहतु हृदि सदा इष्टदुष्टेष्टदस्स्वे ॥

गुणपूर्णं दोषदूरं ज्ञेयं गम्यं बुधैः सदा ।
अनन्ताचार्यहृत्पद्मसद्मानं नृहरिं श्रये ॥

*॥ इति श्रीमदार्यानन्ताचार्यपूज्यपादाराधकेन तत्तनुजेन बालशर्मणा विरचितायां जितन्तेस्तोत्रविवृतौ वैजयन्त्यां पञ्चमोऽध्यायः ॥ ५ ॥*

## ॥ श्री कृष्णार्पणमस्तु ॥

*******